केन्द्रीयसंस्कृतविश्वविद्यालयः, दिल्ली
(संसदः अधिनियमेन स्थापितः)

स्वतन्त्रतायाः अमृतमहोत्सवः

नवशृङ्खला - 01

ISSN : 975-2676

# संस्कृतवार्ता

त्रैमासिकं वार्तापत्रम्

"समायान्तु शुभावसरेऽस्मिन् अस्माकं समृद्धसांस्कृतिकपरम्पराः भाषाश्च प्रति जनेषु नवोत्साहं जनयितुं, संस्कृतं सहजभाषारूपेण जनं जनं प्रति प्रापयितुं संकल्पं करिष्यामः।"

-श्री धर्मेन्द्रप्रधानः
माननीयः शिक्षामन्त्री, भारतसर्वकारः
कुलाधिपतिः, केन्द्रीयसंस्कृतविश्वविद्यालयः, देहली





"संस्कृतं सर्वसंसेव्यं भविष्यं संस्कृताश्रितम्।
नवोन्मेषनवाचाराः समाश्रितपरम्पराः॥
*Sanskrit for all, Sanskrit for future,*
*Sanskrit tradition for innovation.*"

-प्रो. श्रीनिवासवरखेडी
कुलपतिः
केन्द्रीयसंस्कृतविश्वविद्यालयः, देहली

वर्षम्-11 | वैक्रमाब्दः 2078 | पौषकृष्ण 13 - चैत्रकृष्ण 14 | जनवरी 2022 - मार्च 2022

https://www.facebook.com/centralsanskrit
https://www.youtube.com/c/CentralSanskritUniversityDelhi
https://twitter.com/centralsanskrit

"न हायनैर्न वित्तैर्न पलितैर्न बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान्॥"



# कुलपतिवाक्

संस्कृतवार्तायाः नूतनोऽयम् अवतारः। वृत्तं विश्वविद्यालयीयं विस्तारयतीयं संस्कृतवार्ता। संस्कृतं तन्मूलं शास्त्रजातं च केन्द्रीकृत्य केन्द्रीयसंस्कृतविश्वविद्यालयपरिवारेण यानि कार्याणि कृतानि तानि कार्याणि ख्यापयितुं सचित्रः वृत्तसंग्रहोऽयं प्रवर्तते। राष्ट्रियशिक्षानीतेः नवयुगेऽस्मिन् केन्द्रीयसंस्कृतविश्वविद्यालयस्य निखिलान् संकल्पान् कार्यकलापांश्च एषा पत्रिका जनं जनं नयेदिति अभिलाषा।

**वार्तासंस्कृतलोकस्य राजते वर्णचित्रकैः।**
**शिष्टैर्वृत्तैर्यशश्चिह्नैः कार्यैरभिनवैरपि॥**
**नवोऽयमवतारोस्याः पत्रिकायाः मनोहरः।**
**रूपितः कुशलैर्विद्भिः भूयाद् विबुधतोषकः॥**

**प्रो. श्रीनिवासवरखेडी**
कुलपतिः


# संस्कृतवार्ता

**केन्द्रीयसंस्कृतविश्वविद्यालयस्य त्रैमासिकं वार्तापत्रम्**

**ISSN : 975-2676**


'संस्कृतवार्ता'-सम्बद्धं स्वीयाभिप्रायं, प्रकाशनयोग्याः कार्यक्रमवार्ताः च अधोलिखित-ई.मेल् सङ्केतेन प्रेषयन्तु-
sam-var@csu.co.in

विश्वविद्यालयस्य जालपुटेऽपि संस्कृतवार्ता द्रष्टुं शक्यते-
www.sanskrit.nic.in


मुख्यपरामर्शदाता
**प्रो. श्रीनिवासवरखेडी**
कुलपतिः
केन्द्रीयसंस्कृतविश्वविद्यालयः, नवदेहली

सम्पादकाः
**डॉ. मधुकेश्वरभट्टः**
**डॉ. अजयकुमारमिश्रः**
**डॉ. प्रफुल्लगडपालः**

प्रकाशकः
कुलसचिवः
**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**( संसदः अधिनियमेन स्थापितः )**
56-57, इन्स्टीट्यूशनल् एरिया, जनकपुरी,
नवदेहली-110058
011-28524993, 28521994, 28520977
emial : registrar@csu.co.in
website : www.sanskrit.nic.in

## नवकुलपतीनां पदभारग्रहणम्



12.01.2022 तमे दिनाङ्के नवदेहलीस्थे केन्द्रीयसंस्कृतविश्वविद्यालये प्रो. श्रीनिवासवरखेडी-महोदयैः पदभारः गृहीतः। इतः पूर्वं इमे आचार्याः महाराष्ट्रे नागपुरसमीपे रामटेकस्थे कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालये कुलपतिपदे आसीनाः आसन्। नवदेहलीस्थनवकुलपतीनां सर्वैः विश्वविद्यालयसदस्यैः स्वागतं विहितम्। पदभागग्रहणसमनन्तरमेव कुलपतयः ऑनलाईन-माध्यमेन केन्द्रीयसंस्कृतविश्वविद्यालयस्य सर्वान् प्राध्यापकान्, अधिकारिणः, कर्मचारिणः, छात्रांश्च सम्बोधितवन्तः। अस्मिंश्च ऑनलाईन-कार्यक्रमे तैः भविष्यगामिन्यो योजनाः संकल्पाश्च स्वभाषणे उपस्थापिताः।

## गणतन्त्रदिवसोत्सवः समनुष्ठितः




26 जनवरी, 2022 तमे दिनांके केन्द्रीयसंस्कृतविश्वविद्यालयस्य मुख्यालयसहितैः परिसरैः ऐषमः गणतन्त्रदिवसोत्सवः अतीव उत्साहेन आनन्देन च समनुष्ठितः। नवदेहलीस्थे मुख्यालये कुलपतिप्रमुखैः प्राध्यापकैः अधिकारिभिः कर्मचारिभिश्च प्रातःकाले 8:00 वादने अयं कार्यक्रमः आयोजितः। आदौ कुलपतिभिः राष्ट्रध्वजोत्तोलनं ध्वजवन्दनं च विहितम्। ततः सर्वैः राष्ट्रगानं गीतम्।

## नवकुलसचिवैः पदभारः गृहीतः

17.01.2022 तमे दिनाङ्के नवदेहलीस्थे केन्द्रीय-संस्कृतविश्वविद्यालयस्य अगरतलास्थ-एकलव्य-परिसरस्य निदेशकाः प्रो. रणजितकुमारबर्मन्-महोदयाः कुलसचिवत्वेन पदभारं ग्रहितवन्तः।



## समाचरितः अन्ताराष्ट्रीयमहिलादिवसः

08.03.2022 तमे दिनाङ्के अन्ताराष्ट्रीयमहिलादिवसः कुलपतेः प्रो. श्रीनिवासवरखेडीमहोदयानां मार्गदर्शने केन्द्रीयसंस्कृत-विश्वविद्यालये अतीव वैभवेन समाचरितः। कार्यक्रमे व्याकरणशास्त्रमर्मज्ञाः राष्ट्रपतिसम्मानिताः प्रो. पुष्पा दीक्षितमहाभागाः सारस्वतातिथि-रूपेण, गोवाराज्यस्थ-श्रीसुब्रह्मणवाङ्मयीपरिषदः सचिवाः श्रीमत्यः अपर्णा डी. पाटिलमहाभागाः विशिष्टातिथिरूपेण केन्द्रीयसंस्कृत-विश्वविद्यालयस्य कुलसचिवाः प्रो. रणजितकुमारबर्मन्-महाभागाश्च उपस्थाय महिलादिवसस्य महत्त्वपूर्णान् विचारान् उपस्थापयन्। कार्यक्रमे विश्वविद्यालयस्य सर्वाः महिलासदस्याः उपस्थिता आसन्।





## सम्पन्नः अष्टादशः अन्तःपरिसरीयनाट्यमहोत्सवः

नवदेहलीस्थ-केन्द्रीयसंस्कृतविश्वविद्यालयेन प्रतिवर्षमिव ऐषमः अष्टादशः अन्तःपरिसरीयनाट्यमहोत्सवः 22.03.2022 दिनाङ्कात् 24.03.2022 दिनाङ्कं यावत् केन्द्रीयसंस्कृतविश्वविद्यालयस्य भोपालपरिसरे भव्यतया समपादि। अस्मिन् नाट्यमहोत्सवे देशस्य विविधप्रान्तेषु राजमानानां विश्वविद्यालयस्य परिसराणां छात्रैः मनोहराणि संस्कृतनाटकानि अभ्यनीयन्त।

अस्य महोत्सवस्य उद्घाटनकार्यक्रमः 22.03.2022 तमे दिनाङ्के सम्पन्नः। उद्घाटनकार्यक्रमेऽस्मिन् मुख्यातिथित्वेन प्रसिद्धकलाविदः श्रीनितीशभरद्वाजमहोदयाः, सारस्वतातिथित्वेन पाणिनिसंस्कृतविश्वविद्यालयस्य कुलपतयः प्रो. विजयकुमारः सी.जी. वर्याः, अध्यक्षत्वेन केन्द्रीयविश्वविद्यालयस्य कुलपतयः प्रो. श्रीनिवासवरखेडीमहोदयाश्च उपस्थिताः अभूवन्। प्रास्ताविकं विदधानाः नाट्यमहोत्सवस्य संयोजकाः प्रो. रमाकान्तपाण्डेयाः अवोचन् यत् 'भारतस्य अमृतमहोत्सवमुपलक्ष्य अस्मिन् वर्षे स्वातन्त्र्यसंग्रामसम्बद्धानि रूपकाणि अभिनीयन्ते' इति। मुख्यातिथयः श्रीनितीशभरद्वाजमहोदयाः 'संस्कृतरूपकाणि मानवेभ्यः सन्मार्गं दिशन्ति जीवनस्य लक्ष्यं च प्रदर्शयन्ति' इति अकथयन्। सारस्वतातिथयः प्रो. विजयकुमारः सी.जी. अकथयन् यत् 'संस्कृतभाषासामर्थ्यजननमपि नाटकस्य मुख्यं प्रयोजनं विद्यते। उच्चारणम्, पदसम्पद्, भाषणम्, शैली चेति भाषायाः चत्वारि सोपानानि विद्यन्ते। तेषु उत्तमोत्तमा प्राञ्जलशैली प्राप्तव्या चेत् अवश्यं नाटके अभिनयः कर्तव्यः अथवा नाटकं द्रष्टव्यम्' इति। कुलपतयः प्रो. श्रीनिवासवरखेडीमहोदयाः सभां सम्बोधयन्तः अकथयन् यत् 'युवानः छात्राः नूतननाटकानां प्रयोगद्वारा अनुभवे नावीन्यं सम्पादयेयुः। रूपकाणां दर्शनेन अभिनयेन च भाषायाः उच्चारणशुद्धता भविष्यति। आधुनिकरूपकाणां प्रस्तुतेः इदं लक्ष्यं विद्यते यत् आधुनिकसमाजस्य परिस्थितिं जानीयुः।' इति।



ततः भोपालपरिसरीयच्छात्रैः पूर्वरङ्गं प्रस्तुतम्। पूर्वरङ्गे प्रस्तोष्यमाणनाटकानां विषयवस्तु मनोहारिविधिना न्यरूपि। श्रीरणवीरपरिसरस्य छात्रैः 'स्वातन्त्र्यशौर्यम्', वेदव्यासपरिसरस्य छात्रैः 'मीवारप्रतापम्' (1-3 अङ्काः), लखनऊपरिसरस्य छात्रैः 'मीवारप्रतापम्' (4-6 अङ्काः), गुरुवायूरपरिसरस्य छात्रैः 'गीर्वाणविजयम्', श्रीसदाशिवपरिसरस्य छात्रैः 'अशोकविजयम्', एकलव्यपरिसरस्य छात्रैः 'अमरमङ्गलम्' (1-4 अङ्काः), श्रीरघुनाथकीर्तिपरिसरस्य छात्रैः 'अमरमङ्गलम्' (5-8 अङ्काः), जयपुरपरिसरस्य छात्रैः 'भारतविवेकम्', क.जे. सोमैयापरिसरस्य छात्रैः 'शिवराजाभिषेकम्', राजीवगान्धीपरिसरस्य छात्रैः 'वीरपृथ्वीराजनाटकम्', भोपालपरिसरस्य छात्रैः 'भारतविजयम्' इति रूपकाणि अभ्यनीयन्त।




नाट्यमहोत्सवस्य सम्पूर्तिसमारोहकार्यक्रमः 24.03.2022 तमे दिनाङ्के सम्पन्नः। सम्पूर्तिसमारोहे मुख्यातिथित्वेन महर्षिसान्दीपनीराष्ट्रीयवेदविद्या-प्रतिष्ठानस्य सचिवाः प्रो. विरूपाक्षजड्डीपालवर्याः, सारस्वतातिथिरूपेण केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतिचराः प्रो. राधावल्लभत्रिपाठि-महोदयाः, विशिष्टातिथित्वेन प्रो. सत्यवतीत्रिपाठिमहाभागाः, अध्यक्षत्वेन च केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतयः प्रो. श्रीनिवासवरखेडीमहोदयाश्च पदमलमकार्षुः। श्रीराजीवगान्धीपरिसरस्य छात्राः 'वीरपृथ्वीराजनाटकम्' इति रूपकम् उपस्थाप्य प्रथमस्थानं प्राप्तवन्तः। द्वितीयस्थाने भोपालपरिसरस्य छात्रैः अभिनीतं 'भारतविजयम्' जयपुरपरिसरस्य छात्रैः अभिनीतं 'भारतविवेकं' च आस्ताम्। तृतीयस्थानं च श्रीरणवीरपरिसरस्य छात्रैः अभिनीतं 'स्वातन्त्र्यशौर्यम्' इति रूपकम् अवाप्नोत्।

## विश्वविद्यालयस्य उपलब्धयः

- भारतसर्वकारस्य ई-समर्थ-पोर्टल्-मध्ये सफलतया पञ्जीकरणं कार्यारम्भश्च
- केन्द्रसर्वकारस्य परियोजनानाम् आनलाईनमाध्यमेन पञ्जीकर
- भारतसर्वकारस्य ई-मुद्रा-पोर्टल्-मध्ये पञ्जीकरणम्
- भारतसर्वकारस्य डिजि-लॉकर-मध्ये पञ्जीकरणम्
- 'नवशिक्षानीतिः 2020' इत्यस्य क्रियान्वयनम्






# 59तमी अखिलभारतीयशास्त्रीयस्पर्धा



नवदेहलीस्थ-केन्द्रीयसंस्कृतविश्वविद्यालयेन शास्त्रसंवर्धनाय, शास्त्रपरम्पराप्रवर्धनाय अधीतविद्यायाः दृढीकरणाय च प्रतिवर्षम् अखिलभारतीयशास्त्रीयस्पर्धा अखिलभारतस्तरे आयोज्यते। तस्मिन्नेव क्रमे 59तमी अखिलभारतीयशास्त्रीयस्पर्धा बेंगलूरुस्थे कर्णाटकविश्वविद्यालये 27.03.2022 तः 30.03.2022 पर्यन्तं समायोजिता। कार्यक्रमस्यास्य उद्घाटनं 27.03.2022 तमे दिनाङ्के सम्पन्ना। उद्घाटनकार्यक्रमेऽस्मिन् मुख्यातिथिपदं कर्णाटकराज्यस्य महामहिमशालिनो माननीयाः राज्यपालाः श्रीथावरसिंहगहलोतवर्याः, सारस्वतातिथिपदं केन्द्रीयसंस्कृतविश्व-विद्यालयस्य कुलपतिचराः प्रो. परमेश्वरनारायणशास्त्रिवर्याः, अध्यक्षपदं केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतयः श्रीनिवासवरखेडीमहोदयाः कर्णाटकसंस्कृतविश्वविद्यालयस्य कुलपतयः प्रो. के.ई. देवनाथन्-महाभागाः च अलमाकार्षुः। अवसरेऽस्मिन् महामहिमराज्यपालाः 'संस्कृतभाषा देवभाषा विद्यते, इयं भाषा अस्माकं संस्कृतिं जीवनस्य लक्ष्यं च प्रबोधयति' इति अवदन्।

अखिलभारतीयशास्त्रीयस्पर्धासु राज्यस्तरे चिताः 23 राज्येभ्यः समागताः 400 तोऽधिकाः प्रतिभागिनः सम्मिलिता अभूवन्। दशसु विषयेषु भाषणस्पर्धाः, अष्टसु शास्त्रेषु शलाकास्पर्धाः, कण्ठपाठस्पर्धाः, शास्त्रार्थस्पर्धा, समस्यापूर्तिस्पर्धा, अक्षरश्लोकिस्पर्धा चेत्याहत्य 26 स्पर्धाः प्रावर्तन्त। प्रत्येकं स्पर्धासु विजयिनः प्रथम-द्वितीय-तृतीयपुरस्कारैः स्वर्ण-रजत-कांस्यपदकानि समाप्नुवन्। सर्वस्पर्धासु अधिकान् अङ्कान् अवाप्य कर्णाटकराज्यस्य स्पर्धालुगणः विजयवैजयन्त्या व्यभूषयत्।




अस्य कार्यक्रमस्य समापनसमारोहः 30.03.2022 तमे दिनाङ्के परमपूज्यानां श्रीश्री1008 श्रीसत्यात्मतीर्थश्रीपादानां दिव्यसान्निध्ये सम्पन्नः। कार्यक्रमे सारस्वतातिथिरूपेण संस्कृतभारत्याः अखिलभारतीय-संघटनमन्त्रिणः श्रीदिनेशकामत्-महोदयाः, कर्णाटकसंस्कृतविश्व-विद्यालयस्य कुलपतिचराः प्रो. मल्लेपुरम् जी वेङ्कटेशवर्याः च, विशिष्टातिथिरूपेण जयतीर्थविद्यापीठस्य प्राचार्याः डॉ. सत्यध्यानाचार्य-कट्टिमहाभागाः, कर्णाटकसंस्कृतविश्वविद्यालयस्य प्रशासनसमितिसदस्याः श्रीडि.पि. अनन्तवर्याः, अध्यक्षरूपेण केन्द्रीयसंस्कृत-विश्वविद्यालयस्य कुलपतयः श्रीनिवासवरखेडीवर्याः कर्णाटकसंस्कृतविश्वविद्यालयस्य कुलपतयः प्रो. के.ई. देवनाथन् महाभागाः कुलसचिवाः जगदीशचन्द्रवर्याः च समुपातिष्ठन्। एते विजेतृभ्यः छात्रेभ्यः पुरस्कारं व्यतन्वन्।








# नैक के एसएसआर की तैयारी में जुटा संस्कृत विश्वविद्यालय : प्रो. वरखेड़ी

ई दिल्ली, (एसएनबी)। केन्द्रीय संस्कृत विश्वविद्यालय में राष्ट्रीय मूल्यांकन प्रत्यायन परिषद (नैक) लेकर तैयारी के लिए त्रिदिवसीय कार्यशाला आयोजित गई। इसमें नैक से जुड़े हुए सेल्फ स्टडी रिपोर्ट सएसआर) पर चर्चा हुई। इस परिषद् का उद्देश्य किसी विश्वविद्यालय की शैक्षणिक और उसकी चनात्मक गुणवत्ता की जाँच पड़ताल ती है। पूर्व में इस विश्वविद्यालय को नैक ा ग्रेड 'ए' मिल चुका है। अब विश्वविद्यालय के लिए पुनः नैक परीक्षण का समय आ गया । अतः इस विश्वविद्यालय की शैक्षणिक तथा इससे जुड़ी

**त्रिदिवसीय कार्यशाला आयोजित की गई**

वरी ने भी अपने महत्वपूर्ण विचार रखा। प्रो. शुक्ल ने कहा कि ज्ञान अनुशासनात्मक सोच के नजरिये से सोचने की जरूरत है। ताकि दुनिया को हम भारतीय ज्ञान परम्परा विशेषकर संस्कृत विद्या को युगीन अर्थ के अनुकूल वैश्विक स्तर पर ला सकें। इसका कारण यह भी है कि तकनीक भी अपनी संतृप्ता पा चुकी है।

ज्ञान की उपलब्धियों में भी विगत दो-तीन शताब्दियों से ठहराव ही जान पड़ता है। लगता है कि डिजिटल दुनिया भी अपनी अभिव्यक्ति के संसाधों को पार कर चुकी है। अतः फिर से मानवीय भाषा में सोचने की ज़रूरत हो गई

---

पाणिनी संस्कृत विश्वविद्यालय के तीसरे दीक्षांत समारोह में राज्यपाल का 10 मिनट उद्बोधन, भाषा विज्ञान की बताई महत्ता

# संस्कृत जैसी प्राचीन भारतीय भाषा में सदैव प्रासंगिक रहने वाले ज्ञान, विज्ञान को सुरक्षित रखना विवि का दायित्व

**कुलपति ने दिया संस्कृत में स्वागत भाषण, संचालन भी संस्कृत में, कुलसचिव व सारस्वत अतिथि भी संस्कृत भाषा में बोले**

पत्रिका न्यूज नेटवर्क
patrika.com

**उज्जैन.** विज्ञान व संस्कृति के सदैव प्रासंगिक रहने वाले अनेक तत्व संस्कृत भाषा में विद्यमान है। संस्कृत जैसी प्राचीन भारतीय भाषा में सदैव प्रासंगिक रहने वाले ज्ञान, विज्ञान और दर्शन को सुरक्षित रखना विश्वविद्यालय का दायित्व है। समय की जरूरत है कि संस्कृत साहित्य व ज्ञान भंडार के बाद और संरक्षण करके आधुनिक तकनीक के साथ उसका समन्वय किया जाए। संस्कृत भाषा का ज्ञान हमारे समाज, देश के साथ ही पूरे विश्व के लिए भी लाभदायक है। अपना देश विश्व को एक कुटुम्ब मान रहा है। वसुधैव कुटुम्ब की बात हम करते हैं। विवेकानंद जी को याद किया है। जब अमेरिका के शिकागो में धर्म संसद हो रहा था तब विवेकानंद जी गए थे। उन्होंने अपना धर्मग्रंथ नीचे धरातल पर रखा और कहा कि हमारा जो धर्म ग्रंथ है वो मूल में है। यदि मूल(आधार) मजबूत होता है तो भवन भी मजबूत बनता है और सुरक्षित भी रहता है। महर्षि पाणिनि संस्कृत एवं वैदिक विश्वविद्यालय उज्जैन के कुलाधिपति व प्रदेश के राज्यपाल मंगूभाई पटेल ने अपने 10 मिनट के उद्बोधन में हमारी संस्कृति में संस्कृत भाषा और धर्म ग्रंथ में इसके महत्व को समझाया।

शुक्रवार 25 मार्च को संस्कृत विवि का तीसरा दीक्षांत समारोह था, जो राज्यपाल की उपस्थिति एवं अध्यक्षता में आयोजित किया गया। दीक्षांत समारोह विक्रम कीर्ति मंदिर में आयोजित किया गया। समारोह के आरम्भ में राष्ट्रगान, सरस्वती वंदना एवं विश्वविद्यालय के कुलगान का गायन किया गया। स्वागत भाषण विश्वविद्यालय के कुलपति प्रो. विजयकुमार सीजी ने किया। दीक्षांत समारोह में प्रदेश के उच्च शिक्षा मंत्री मोहन यादव मुख्य अतिथि के रूप में उपस्थित रहे। इस आयोजन में राज्यपाल ने मंत्री यादव को जन्मदिवस की शुभकामनाएं देते हुए वक्तव्य प्रारम्भ किया था। उन्होंने उपाधि एवं पदक प्राप्तकर्ता छात्रों को शुभकामनाएं देते हुए कहा कि भारतीय संस्कृति वसुधैव कुटुम्बकम् की भावना से ओतप्रोत है। विश्व में भाईचारा का उदाहरण है भारत। उन्होंने यह भी कहा कि संस्कृत प्राचीन ज्ञान-विज्ञान की भाषा होने के कारण भारत की आत्मा है। आर्यभट्ट, भास्कर, सुश्रुत एवं चरक का संस्कृत में योगदान को स्पष्ट करते हुए उन्होंने योग दर्शन एवं योग दिवस की चर्चा भी की। विश्वविद्यालय द्वारा चलाए जा रहे नवीन पाठ्यक्रमों के संचालन एवं नवीन केंद्रों के स्थापन हेतु उन्होंने प्रसन्नता व्यक्त की।



विद्यार्थियों को उपाधि प्रदान करते राज्यपाल पटेल।

## कोर्ट में गीता की मान्यता, लेकिन पाठ्यक्रम में नहीं

मुख्य अतिथि मंत्री यादव ने कहा कि कोर्ट में हमेशा गीता पर हाथ रखवाकर कसम खिलाई जाती है कि 'मैं जो भी कहूंगा सच कहूंगा', लेकिन पाठ्यक्रम में गीता पढ़ाई की व्यवस्था नहीं है। मंत्री ने बताया कि नई शिक्षा नीति में गीता, रामायण, महाभारत के अध्ययन की व्यवस्था की गई है। मंत्री ने विश्वविद्यालय के नवीन प्रकल्पों को उच्चतम स्तर पर ले जाने व विवि की उन्नति, प्रचार-प्रसार के लिए हर संभव निर्णय लेने का आश्वासन भी दिया। सारस्वत अतिथि के रूप में केंद्रीय संस्कृत विवि, नईदिल्ली के कुलपति प्रो. श्रीनिवास वरखेडी ने संस्कृत भाषा में दिए अपने उद्बोधन में कहा कि संस्कृत मात्र भाषा नहीं अपितु ज्ञान विज्ञान की जननी है। उन्होंने कहा कि संस्कृत भाषा का सरल रूप के प्रयोग एवं लोकोपयोगी होना अनिवार्य है। विशिष्टातिथि के रूप में विधायक पारसचंद्र जैन उपस्थित रहे। दीक्षांत समारोह में विक्रम विश्वविद्यालय के कुलपति प्रो. अखिलेश कुमार पाण्डेय, कुलसचिव डॉ. प्रशांत पौराणिक एवं कुलानुशासक प्रो. शैलेंद्र कुमार शर्मा सहित अन्य वरिष्ठ गणमान्य उपस्थित रहे। समारोह में कार्यपरिषद एवं विद्यापरिषद के समस्त सदस्य भी उपस्थित रहे।

**1351 विद्यार्थी उपाधि के पात्र:** संस्कृत विवि के कुलसचिव डॉ. दिलीप सोनी ने बताया कि पाणिनि संस्कृत विश्वविद्यालय से 20 महाविद्यालय संबद्ध हैं। सत्र 2020-21 में स्नातक, स्नातकोत्तर तथा डिप्लोमा परीक्षाओं में उत्तीर्ण हुए कुल 1351 छात्र उपाधि हेतु पात्र छात्रों की सूची जारी की गई थी। शास्त्री, आचार्य, विद्यावारिधि एवं डिप्लोमा के कुल 137 पंजीकृत छात्रों में से प्रावीण्य सूची में प्रथम, द्वितीय एवं तृतीय स्थान प्राप्त 12 छात्रों को स्वर्ण, 10 को रजत एवं 11 को कांस्य सहित कुल 33 पदक एवं विद्यावारिधि के 11 छात्रों सहित 44 छात्रों को कुलाधिपति के हाथों उपाधियां प्रदान की गईं। शेष पंजीकृत छात्रों को महर्षि पतंजलि संस्कृत संस्थान भोपाल मध्यप्रदेश के अध्यक्ष भरत बैरागी, विवि कुलपति प्रो. विजय कुमार एवं कुलसचिव डॉ. सोनी सहित कार्यपरिषद् सदस्यों द्वारा प्रमाण पत्र प्रदान किए गए। संचालन विवि परीक्षा प्रभारी डॉ. तुलसीदास परौहा ने किया। धन्यवाद कुलसचिव ने ज्ञापित किया।

### डोम में गर्मी असहनीय

पिछले दो दीक्षांत समारोह पाणिनि संस्कृत विवि के कैंपस में डोम लगाकर हुए, लेकिन इस बार डोम में गर्मी के अहसास को भांपते हुए विक्रम कीर्ति मंदर में इसका आयोजन किया गया।

**संस्कृत में दिया स्वागत भाषण:** विश्वविद्यालय के कुलपति प्रो. विजय कुमार ने स्वागत भाषण संस्कृत भाषा में दिया। इस दौरान उन्होंने जल्दबाजी में पटेल को महाराष्ट्र का राज्यपाल बता दिया, जिसे तत्काल दुरुस्त करते हुए मप्र के राज्यपाल के रूप में संबोधित किया।

### उपाधि वितरण में गड़बड़ाई व्यवस्था

नाम उच्चारण के साथ उपाधि वितरण में व्यवस्था गड़बड़ा गई, जिससे विद्यार्थी प्रमाण-पत्र बदलवाने के लिए भटकते रहे। दरअसल वितरण के दौरान उपाधि प्रामण पत्र किसी ओर का किसी ओर को वितरित हो गया था।

---

तरुण भारत
Apla Nagpur | 2022-04-01 | Page- 3
epaper.tarunbharat.net

# भारतीय वेद हे ज्ञानाचे भांडार

**डॉ. मोहनजी भागवत यांचे प्रतिपादन**

◆ नागपूर, ३१ मार्च

वेद हे ज्ञानाचे भांडार असून, ते प्राप्त करण्यासाठी तपश्चर्या करावी लागते. मात्र, तत्पूर्वी सर्वांचे कल्याण हे आपले दायित्व आहे, याची जाणीव गरजेची असल्याचे प्रतिपादन रा.स्व. संघाचे सरसंघचालक डॉ. मोहनजी भागवत यांनी आज येथे केले.

ब्रह्मर्षी डॉ. चन्ना केशव शास्त्री यांनी लिहिलेल्या 'वेदिक फिलॉसॉफिकल रेमिडीज' या पुस्तकाचे प्रकाशन सरसंघचालकांच्या हस्ते देवी अहल्या मंदिरात झाले. श्री धात्रे नमः ट्रस्टतर्फे आयोजित या कार्यक्रमाला राष्ट्रसेविका समितीच्या प्रमुख संचालिका शांताक्का, दिल्लीच्या सेंट्रल संस्कृत विद्यापीठाचे कुलगुरू श्रीनिवास वरखेडी, ट्रस्टचे अध्यक्ष जे. नृसिंहराव व्यासपीठावर उपस्थित होते.



पुस्तकाचे प्रकाशन करताना डॉ. मोहनजी भागवत. शेजारी श्रीनिवास वरखेडी, डॉ. चन्ना केशव शास्त्री, शांताक्का व जे. नृसिंहराव

आपल्या उद्बोधनात प्रारंभी ज्ञानाबद्दल सखोल विवेचन करून डॉ. मोहनजी भागवत म्हणाले की, वेद ज्ञानाचे भांडार आहे. आत्मसाक्षात्कारापासून शिल्पकलेपर्यंत सर्व बाबी त्यात आहेत. वेद हे संपूर्ण ज्ञान-विज्ञानाचे स्रोत आहे. पण, आपण केवळ शरीरामागे धावणारे नाही. वेद प्राप्त करण्यासाठी काही नियम मात्र आहेत. ते प्राप्त करण्यासाठी तपश्चर्या हवी. प्रयत्न हवेत. म्हणून आधी वेद वाचावे लागतील.

वेदातील ज्ञान नुसते वाचूनही होणार नाही. अनुभव घ्यावा लागेल. अभ्यास करावा लागेल. सुचिता हवी. सरलता हवी. अनुभवाने सिद्ध करावे लागेल. भाव शुद्ध हवा, याकडे सरसंघचालकांनी लक्ष वेधले. याशिवायही अनेक नियम त्यांनी सांगितले. आजच्या प्रचलित वैज्ञानिक पद्धतीनुसार या ज्ञानाची माहिती जगाला करून द्यावी लागेल, कारण सर्वांचे कल्याण आपले दायित्व आहे, असेही ते म्हणाले.

पुस्तकाचे लेखक ब्रह्मर्षी डॉ. चन्ना केशव शास्त्री म्हणाले की, वेद काय आहे, हे जगाला सांगायला हवे. पाश्चात्य संस्कृतीने जगाला भ्रमित केले आहे की, वेद हे लिटरेचर आहे. जगात एक शाश्वत सत्य आहे की, फिलॉसॉफिकल रिॲक्शन म्हणजे वेद. विविध आजारांवरील उपायसुद्धा वेदांमध्ये असून, त्याचीच माहिती या पुस्तकात असल्याचे डॉ. शास्त्री म्हणाले.

श्रीनिवास वरखेडी यांनी पुस्तकाचा परिचय करून दिला. कवि कुलगुरू कालिदास संस्कृत विद्यापीठाचे कुलगुरू मधुसुदन पेन्ना यांचा याप्रसंगी सत्कार करण्यात आला. कार्यक्रमाचे संचालन शशी बघेल यांनी केले. मोनिका अग्रवाल यांनी आभार मानले. विविध क्षेत्रातील मान्यवर, संघटनांचे पदाधिकारी कार्यक्रमाला उपस्थित होते.

◂(तभा वृत्तसेवा)

---

# ಹುಕ್ಕೇರಿ ಶ್ರೀ ಸಂಸ್ಕೃತ ಪ್ರೇಮ ಅನನ್ಯ: ಸದಾನಂದಗೌಡ

## ಬೆಂಗಳೂರಿನ ಸಿಂಧಿ ಮಹಾವಿದ್ಯಾಲಯದಲ್ಲಿ ಸಂಸ್ಕೃತೋತ್ಸವ, ಪ್ರತಿಭಾ ಪುರಸ್ಕಾರ

• **ಕನ್ನಡಪ್ರಭ ವಾರ್ತೆ** ಬೆಳಗಾವಿ

ಉತ್ತರ ಕರ್ನಾಟಕದ ಪ್ರತಿಷ್ಠಿತ ಮಠ ಬೆಳಗಾವಿ ಹುಕ್ಕೇರಿ ಹಿರೇಮಠ. ಈ ಮಠಾಧ್ಯಕ್ಷರಾಗಿರುವ ಶ್ರೀ ಚಂದ್ರಶೇಖರ ಶಿವಾಚಾರ್ಯ ಸ್ವಾಮೀಜಿಯವರು ಗಡಿಭಾಗದಲ್ಲಿ ಕನ್ನಡವನ್ನು ಉಳಿಸಿ ಬೆಳೆಸಿದ್ದಾರೆ. ಸಂಸ್ಕೃತ ಭಾಷೆ ಉಳಿಯಲಿ ಎಂದು ತಮ್ಮ ಮಠದಿಂದ ಸಂಸ್ಕೃತದಲ್ಲಿ ಅದ್ಭುತ ಸಾಧನೆ ಮಾಡಿರುವ ವ್ಯಕ್ತಿಗಳಿಗೆ ಸಂಸ್ಕೃತ ಸೇವಾವೃತ್ತಿ ಪ್ರಶಸ್ತಿ ನೀಡಿ ಗೌರಸುವುದರ ಮೂಲಕ ಸಂಸ್ಕೃತ ಪ್ರೇಮವನ್ನು ಎತ್ತಿ ಹಿಡಿದ್ದಾರೆ ಎಂದು ಮಾಜಿ ಮುಖ್ಯಮಂತ್ರಿ ಡಿ.ಸದಾನಂದಗೌಡ ಹೇಳಿದರು.

ಬೆಂಗಳೂರು ನಗರದ ಹೆಬ್ಬಾಳ ಕೆಂಪಾಪುರ ಮುಖ್ಯ ರಸ್ತೆಯಲ್ಲಿರುವ ಸಿಂಧಿ ಮಹಾದ್ಯಾಲಯದಲ್ಲಿ ಜರುಗಿದ ಸಮೇಕ್ ಪ್ರತಿಷ್ಠಾನದಿಂದ ಹಮ್ಮಿಕೊಂಡಿದ್ದ ಸಂಸ್ಕೃತೋತ್ಸವ ಮತ್ತು ಪ್ರತಿಭಾ ಪುರಸ್ಕಾರ, ನವದೆಹಲಿಯ ಕೇಂದ್ರೀಯ ಸಂಸ್ಕೃತ ವಿಶ್ವದ್ಯಾಲಯದ ಕುಲಪತಿ ಡಾ. ಶ್ರೀನಿವಾಸ ವರಕೇಡಿ ಅವರಿಗೆ ಸಂಸ್ಕೃತ ಸೇವಾವೃತ್ತಿ ಪ್ರಶಸ್ತಿ ನೀಡಿ ಮಾತನಾಡಿದರು.

ಪ್ರಶಸ್ತಿ ಸ್ವೀಕರಿಸಿ ಕುಲಪತಿ ಡಾ.ಶ್ರೀನಿವಾಸ ವರಕೇಡಿ ಮಾತನಾಡಿ, ನಾವು ಸಂಸ್ಕೃತದಿಂದ ಸಾಕಷ್ಟು ಕಲಿಯುವುದು ಇದೆ. ದೇಶದಲ್ಲಿ ಸಂಸ್ಕೃತಕ್ಕೆ ಹೆಚ್ಚಿನ ಮಾನ್ಯತೆ ಇದೆ. ನಾವೆಲ್ಲರೂ ಸಂಸ್ಕೃತವನ್ನು ಮನೆಯ ಭಾಷೆಯನ್ನಾಗಿ ಮಾಡಿಕೊಳ್ಳಬೇಕು. ಈ ನಿಟ್ಟಿನಲ್ಲಿ ಹುಕ್ಕೇರಿ ಶ್ರೀಗಳು ಕಾರ್ಯ ಮಾಡುತ್ತ ನನಗೆ ಈ ಅದ್ಭುತವಾದ ಪ್ರಶಸ್ತಿಗೆ ಆಯ್ಕೆ ಮಾಡಿರುವುದು ಮನ ತುಂಬಿ ನೆನೆಯುತ್ತೇನೆ ಎಂದರು.

ಸಾನ್ನಿಧ್ಯ ವಹಿಸಿದ್ದ ಹುಕ್ಕೇರಿ ಹಿರೇಮಠದ ಶ್ರೀ ಚಂದ್ರಶೇಖರ ಶಿವಾಚಾರ್ಯ ಸ್ವಾಮೀಜಿ ಮಾತನಾಡಿ, ಸಂಸ್ಕೃತ ಉಳಿಯಬೇಕಿತ್ತು ಎಂದರೆ ಮಡಿವಂತಿಕೆ, ಪ್ರತ್ಯೇಕತೆ ಬಿಡಬೇಕು ಅಂದಾಗ ಮಾತ್ರ ಸಂಸ್ಕೃತ ಉಳಿದು ಬೆಳೆಯಲು ಸಾಧ್ಯ. ಸಂಸ್ಕೃತದಿಂದ ನಾವು ಸಾಕಷ್ಟು ಕಲಿಯಬಹುದು. ಇಂದು ಸಂಸ್ಕೃತ ಭಾಷೆಯನ್ನು ಎಲ್ಲರೂ ಕಲಿಯಬೇಕಿದೆ. ಈ ದೇಶದ ಪ್ರಧಾನಿ ನರೇಂದ್ರ ಮೋದಿ ಅವರು ಸಂಸ್ಕೃತವನ್ನು ಕಲಿತಿದ್ದಾರೆ. ಆದಕ್ಕಾಗಿ ಅವರಲ್ಲಿ ಸಂಸ್ಕೃತ ಇದೆ ಎಂದರು.

ಇದೇ ಸಂದರ್ಭದಲ್ಲಿ ಸಿಂಧೆ ಮಹಾದ್ಯಾಲಯದ ನಿರ್ದೇಶಕ ಬಿ.ಎನ್.ಶ್ರೀಕಂಠ ಮಾತನಾಡಿದರು. ಸಿಂಧೆ ಮಹಾದ್ಯಾಲಯದ ಪ್ರಾಂಶುಪಾಲ ಎನ್.ಆಶಾ ಹಾಗೂ ಕೇಸರಿ ಪ್ರತಿಷ್ಠಾನದ ತಮ್ಮೇಶ ಗೌಡ, ಸಂಮೇಕ ಪ್ರತಿಷ್ಠಾನದ ಎಂ.ಆರ್.ಸತೀಶ, ಸಾಮಾಜಿಕ ಕಾರ್ಯಕರ್ತ ಮಹೇಶ ಮನೋಟಾ, ಪ್ರಕಾಶ ಸಾರಂಗ, ಡಾ.ಶ್ರೀಕಂಠ ಸೇರಿದಂತೆ ಇನ್ನಿತರರು ಉಪಸ್ಥಿತರಿದ್ದರು.

ಈ ಕಾರ್ಯಕ್ರಮದಲ್ಲಿ ಸುಮಾರು 200 ಜನ ಸಂಸ್ಕೃತ ವಿದ್ಯಾರ್ಥಿಗಳಿಗೆ ಪ್ರತಿಭಾ ಪುರಸ್ಕಾರವನ್ನು ನೀಡಿ ಗೌರಸಲಾಯಿತು.



ಕನ್ನಡಪ್ರಭ Mon, 21 February 2022
https://kpepaper.asianetnews.com/c/66370656

---



कांस्टीट्यूशन क्लब में युवा चेतना की ओर से आयोजित सेमिनार को संबोधित करते पूर्व केंद्रीय मंत्री व राज्यसभा सदस्य सुरेश प्रभु • जागरण

जागरण संवाददाता, नई दिल्ली: कांस्टीट्यूशन क्लब में रविवार को युवा चेतना के तत्वावधान में लोकतंत्र और संविधान विषय पर सेमिनार आयोजित किया गया। स्वामी अभिषेक ब्रह्मचारी ने इसका उद्घाटन करते हुए कहा कि भारत एक लोकतांत्रिक देश है, जहां सभी लोग सामान हैं। वहीं, भारत के लोकपाल जस्टिस पिनाकी चंद्र घोष ने कहा कि देश की आजादी के उपरांत हमें लोकतंत्र और संविधान प्राप्त हुए। कार्यक्रम के मुख्य वक्ता और राज्यसभा सदस्य सुरेश प्रभु ने कहा कि संविधान रक्षक है, जो आम लोगों के अधिकारों की रक्षा करता है। उन्होंने कहा कि यह लोकतंत्र की सुंदरता ही है कि एक गरीब का बेटा प्रधानमंत्री बनता है।

सेमिनार की अध्यक्षता करते हुए युवा चेतना के राष्ट्रीय संयोजक रोहित कुमार सिंह ने कहा कि समाज ... से जोड़कर ही लोकतंत्र को मजबूत किया जा सकता है। वहीं, राष्ट्रीय संस्कृत विश्वविद्यालय दिल्ली कुलपति प्रो. श्रीनिवास वार... ने कहा कि लोकतंत्र की यही श... है कि जब सरकार को लगता है... जनता कानून से सहमत नहीं है... वह कानून वापस हो जाता है।... उद्योगपति महेंद्र गोयनका ने कहा... जनता लोकतंत्र का गहना है... संविधान उसका रक्षक है।

इसके अलावा मौलाना आ... मेडिकल कालेज में सर्जरी वि... के अध्यक्ष डा. पवनींद्र लाल ने... कि लोकतंत्र के चलते ही है कि... में गरीब से वोट के लिए शक्तिश... लोग भी याचना करते हैं। इस अ... पर डा. ब्रजभूषण ओझा, अ... नदवी, शारदा त्यागी, रमेश य... अर्चना हांडा, रोचीका अग्र... अजय पांडेय, अंजनी राय, बीरेंद्र... नीरज गर्ग व गगनप्रीत सिंह... उपस्थित रहे।



---

# 'वेद' ज्ञान आणि विज्ञानाचे संगणकीकृत 'कोड बुक'

**सरसंघचालक डॉ. मोहन भागवत यांचे प्रतिपादन**

**लोकसत्ता प्रतिनिधी**

... रेमिडिज' या पुस्तकाचे प्रकाशन भागवत यांच्या हस्ते करण्यात आले. यावेळी ते बोलत होते.

देवी अहिल्या मंदिरच्या सभागृहात या कार्यक्रमाचे आयोजन करण्यात आले होते. कार्यक्रमाला राष्ट्रसेविका समितीच्या संचालिका शांताक्का, कवी कुलगुरू संस्कृत विद्यापीठाचे कुलगुरू श्रीनिवास वरखेडी उपस्थित होते.

काही लोक विज्ञान नाकारतात. हे दोन्ही टोकाचे प्रयोग आहेत. सत्याकडे जाण्याचा एकच मार्ग आहे, तो योग्य आहे आणि बाकीचे मार्ग चुकीचे आहे, असे समजने बरोबर नाही.

जो मार्ग खोटा आहे तो चुकीचासुद्धा आहे. प्रत्येक गोष्टीची चाचणी केल्यानंतरच त्याबाबत निर्णय घ्यावा. असेही भागवत

---

2 ಈ ಸಂಜೆ

# ಭಾರತೀಯ ಸಮಾಜದಲ್ಲಿ ಸಂಸ್ಕೃತ ಭಾಷೆ ಕೊಡುಗೆ ಅಪಾರ





**ಬೆಂಗಳೂರು, ಮಾ.27-** ಭಾರತೀಯ ಇತಿಹಾಸ, ತತ್ವಶಾಸ್ತ್ರ, ಸಂಸ್ಕೃತಿ, ಕಲೆ ಮತ್ತು ಸೌಂದರ್ಯ ಶಾಸ್ತ್ರದ ಪುನರ್‌ನಿರ್ಮಾಣವನ್ನು ಸಂಸ್ಕೃತ ಶಿಕ್ಷಣ ಮತ್ತು ಸಂಶೋಧನೆಯ ಸಹಾಯದಿಂದ ಸಾಧಿಸಬಹುದು ಎಂದು ರಾಜ್ಯಪಾಲ ಥಾವರ್ ಚಂದ್ ಗೆಹ್ಲೋಟ್ ಅವರು ಹೇಳಿದರು.

ದೆಹಲಿಯ ಕೇಂದ್ರೀಯ ಸಂಸ್ಕೃತ ವಿಶ್ವವಿದ್ಯಾಲಯ ಮತ್ತು ಬೆಂಗಳೂರಿನ ಕರ್ನಾಟಕ ಸಂಸ್ಕೃತ ವಿಶ್ವವಿದ್ಯಾಲಯ ಆಯೋಜಿಸಿದ್ದ 59ನೇ ಅಖಿಲ ಭಾರತ ಶಾಸ್ತ್ರೀಯ ಸ್ಪರ್ಧೆ ಸಮಾರಂಭವನ್ನು ಉದ್ಘಾಟಿಸಿ, ಅವರು ಮಾತನಾಡಿದರು.

ಸಂಸ್ಕೃತ ಭಾಷೆಯು ಜ್ಞಾನ ಸಂಶ್ಲೇಷಣೆಯ ಶ್ರೀಮಂತ ಸಂಪ್ರದಾಯವನ್ನು ಹೊಂದಿದೆ, ಇದು ಶಿಕ್ಷಣದ ಎಲ್ಲಾ ಶಾಖೆಗಳ ಒಟ್ಟಾರೆ ಅಭಿವೃದ್ಧಿಗೆ ಅಪಾರ ಕೊಡುಗೆ ನೀಡಿದೆ. ಸಂಸ್ಕೃತ ಭಾಷೆ ನಮ್ಮ ದೇಶದ ಪ್ರಾಚೀನ ಭಾಷೆ, ಎಲ್ಲಾ ಪ್ರಾಚೀನ ಗ್ರಂಥಗಳು ಮತ್ತು ವೇದಗಳು ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿವೆ. ಅದರಲ್ಲಿ ದೇಶದ ಸಂಸ್ಕೃತಿ ಅಡಗಿದೆ. ಸಂಸ್ಕೃತ ಭಾಷೆ ಆಧುನಿಕ ... ಪ್ರಸ್ತುತವಾಗಿದೆ. ...

## सम्पन्ना राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदः एस्.एस्.आर्. प्रबोधनकार्यशाला

केन्द्रीयसंस्कृतविश्वविद्यालये कुलपतीनां प्रो. श्रीनिवासवरखेडीमहाभागानां मार्गदर्शने एस्.एस्.आर्. निर्माण-सम्बद्धा त्रिदिवसीया कार्यशाला 09.03.2022 दिनाङ्कतः 11.03. 2022 दिनाङ्कं यावत् मुख्यालये समायोजिता। अस्याः कार्यशालायाः उद्घाटनसत्रे मुख्यातिथिरूपेण वर्धास्थस्य महात्मगान्धि-अन्ताराष्ट्रियहिन्दीविश्वविद्यालयस्य कुलपतयः प्रो. रजनीशकुमारशुक्लवर्याः, मुम्बईस्थस्य एन्.एस्.डी.टी. महिला-विश्वविद्यालयस्य पूर्वकुलपतयः प्रो. शशिकलावञ्जारीमहाभागाः सारस्वतातिथिरूपेण अध्यक्षरूपेण केन्द्रीयसंस्कृतविश्व-विद्यालयस्य कुलपतयः श्रीनिवासवरखेडीवर्याः च उपस्थिताः





आसन्। द्वितीये अहनि कविकुलगुरुकालिदाससंस्कृत-विश्वविद्यालयस्य आन्तरिकगुणवत्ताप्रत्यायनप्रकोष्ठस्य संयोजकाः प्रो. परागजोशिवर्याः, तस्यैव विश्वविद्यालयस्य प्रो. कविता-होलावर्याः च मार्गदर्शनं अकुरुताम्। कार्यशालायाः अन्तिमदिने बेङ्गलूरूस्थायाः राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदः मार्गदर्शकाः डॉ. देवेन्द्रकावडे-महाभागाः, श्रीसोमनाथसंस्कृतविश्वविद्यालयस्य कुलपतयः डॉ. ललितकुमारपटेलवर्याश्च मार्गदर्शनं प्रायच्छन्।

## समायोजिता राष्ट्रियशिक्षानीतेः नवोन्मेषकार्यशाला




केन्द्रीयसंस्कृतविश्वविद्यालये राष्ट्रियशिक्षानीतेः क्रियान्वयनाय नवोन्मेषकार्यशाला 02.03.2022 दिनाङ्कतः 06.03.2022 दिनाङ्कं यावत् आभासीयमाध्यमेन समायोजिता। तत्र केन्द्रीयसंस्कृतविश्वविद्यालयस्य गरिष्ठाः आचार्याः देशस्य पृथितविद्वांसः च भागमग्रहीषुः। कार्यशालामिमाम् उद्बोधयन् विश्वविद्यालयस्य कुलपतिः प्रो. श्रीनिवासवरखेडीमहाभागः अवदत् यत् 'विश्वविद्यालयस्य पाठ्यक्रमे राष्ट्रियशिक्षानीतौ उक्तायाः विषयानम्यतायाः (Subject Flexibility) अन्तर्भावः स्यात्' इति।

## आरब्धाः भविष्यन्ति भारतीयज्ञानपरम्पराविषयकपाठ्यक्रमाः

केन्द्रीयसंस्कृतविश्वविद्यालये भारतीयज्ञानपरम्परामाश्रित्य 75 विषयेषु अभिनवाः पाठ्यक्रमाः शीघ्रमेव समारप्स्यन्ते। एतदर्थं शैक्षणिकनिदेशकैः प्रो. बनमालीमहोदयैः विज्ञापनपुरस्सरं परिसरप्राध्यापकाः पाठ्यक्रमनिर्माणार्थं सूचितास्सन्ति। तत्र ज्योतिष-वास्तुशास्त्र-कर्मकाण्ड-धर्मशास्त्र-संस्कृतभाषाशिक्षण-कला-गणित-विधिशास्त्र-धर्मदर्शन-भूगोलशास्त्र-ज्यामिति-प्रबन्धनविद्या-अर्थशास्त्र-समाजशास्त्र-योग-संगणक-चित्रकला-कविशिक्षादिविषये डिप्लोमापाठ्यचर्याः भविष्यन्ति। तथैव प्राकृतिकभाषाप्रक्रिया-अनुसारक-सांगणिकभाषाविज्ञान-वैदिकगणित-अवधान-रंगमंच-तीर्थाटन-बौद्धदर्शन-जैनदर्शन-पौरोहित्य-पाण्डुलिपिविज्ञान-शिलालेखविज्ञान-शिक्षाशास्त्र-योगादिविषये प्रमाणपत्रपाठ्यचर्याः भविष्यन्ति। एवमेव नैके परिचयपाठ्यक्रमाः अपि विश्वविद्यालयेन संचालयिष्यन्ते। अधिकं विवरणं विश्वविद्यालयस्य जालपुटे (www.sanskrit.in) लब्धुं शक्यते।

## केन्द्रीयसंस्कृतविश्वविद्यालयप्रवेशपरीक्षाः राष्ट्रियपरीक्षा-एजेंसी ( N.T.A. ) माध्यमेन भविष्यन्ति

केन्द्रीयसंस्कृतविश्वविद्यालयस्य शास्त्रि-आचार्य-बीए-एमए इत्यादिकक्ष्यासु प्रवेशः राष्ट्रियपरीक्षाएजेंसीमाध्यमेन भविष्यन्ति। इच्छुकाः अध्येतारः समये समये विश्वविद्यालयस्य जालपुटं द्रष्टुमर्हन्ति।

## प्रयागराजस्थ-गङ्गानाथझापरिसरवार्ता




गङ्गानाथझापरिसरे 25.03.2022 दिनाङ्के नवप्रविष्ट-शोधच्छात्राणां प्रशिक्षणकार्यक्रमः आरब्धः, यस्य प्राक्शोध-पाठ्यक्रमस्य आरम्भः शोधप्रविधिपरिचयकार्यशालया सञ्जातः।

सप्तदिवसीयायामस्यां कार्यशालायां देशस्य विविधेभ्यः प्रान्तेभ्यः समागताः शताधिकाः शोधच्छात्राः प्रतिभागिनः आसन्। कार्यशालायाः मङ्गलसत्रे प्रो. हरिदत्तशर्मवर्याः मुख्यातिथयः, प्रो. सन्तोषकुमारशुक्लमहाशयाः मुख्यवक्तारः, परिसरनिदेशकाः प्रो. ललितकुमारत्रिपाठिवर्याः च अध्यक्षाः आसन्। संयोजिका डॉ. अपराजितामिश्रा स्वागतभाषणं प्रस्तुतवती।

अस्यां कार्यशालायां प्रो. सन्तोषकुमारशुक्लमहाशयाः (संस्कृतं एवं प्राच्यविद्याध्ययनसंस्थानम्, जे.एन.यू., नवदेहली) समागत्य दिनत्रयं शोधस्वरूपविमर्शः, शोधसर्वेक्षणादिविमर्शः, शोधोपकरणविमर्शः, पाठसमालोचनाविमर्शः, शोधनैतिकताविमर्शः इत्यादीन् विषयान् अधिकृत्य व्याख्यानानि दत्तवन्तः। प्रयागविश्वविद्यालयस्य संस्कृतविभागाध्यक्षचराणां प्रो. हरिदत्तशर्मवर्याणां व्याख्यानं संस्कृतक्षेत्रे सामग्रीसङ्कलनस्य आनुषङ्गिकस्रोतांसि, संस्कृतानुसन्धानक्षेत्रे प्राच्यविद्याविषयिणीनां पत्रपत्रिकाणाम् अवदानं चेत्यनयोः विषययोः अभवत्।

अग्रिमेषु चतुर्षु दिवसेषु डॉ. गणेश टी. पण्डितवर्यस्य व्याख्यानानि अभवन्। अस्यां कार्यशालायां शोधप्रविधिसम्बद्धान् विविधान् विषयान् अभिलक्ष्य शोधार्थिनां सर्वविधजिज्ञासानां समाधानं चर्चासत्रेषु आचार्यैः विहितम्।

## शृङ्गेरीस्थ-राजीवगान्धीपरिसरवार्ता

**गणतन्त्रदिवसः -** 26.01.2022 तमे दिनाङ्के गणतन्त्रदिवसः कोरोनासुरक्षां दृष्ट्वा संग्रहेण आचरितः। ध्वजोत्तोलनम्, राष्ट्रगानम्, निदेशकवर्यस्य आचार्यसुब्राय वि भट्टवर्यस्य भाषणं चात्र सम्पन्नम्।

**परिषदामुद्घाटनकार्यक्रमः -** 18.02.2022 तमे दिनाङ्के नूतनकुलपतिवर्याणाम् आचार्यश्रीनिवासवरखेडीमहोदयानां महनीयोपस्थितौ वाग्वर्धिनीस्पर्धिष्णुवाक्यार्थ- परिषदामुद्घाटनकार्यक्रमः वैभवेन सम्पन्नः।

**छात्रोपलब्धयः -**



कर्णाटकराज्यस्तरीयशास्त्रवाक्प्रतियोगितासु 7 प्रथम स्थानानि, 5 द्वितीयं स्थानानि, 3 तृतीयं स्थानानि च प्राप्य राजीवगान्धीपरिसरस्य छात्राः विजयिनोऽभूवन्।

अखिलभारतीयशास्त्रवाक्प्रतियोगितासुपरिसरीया-श्छात्रा विजयिनो भूत्वा कर्णाटकराज्यस्य विजयवैजयन्तीं प्रापयन्। परिसरस्य 7 छात्राः सुवर्णपदकम्, 3 छात्राः रजतपदकम्, 2 छात्रौ कांस्यपदकम् 2 छात्रौ विशिष्ट-पुरस्कारञ्च अलभन्त।

यू.जी.सी नेट् परीक्षामुत्तीर्य जे.आर्.एफ् अर्हतां प्राप्तवान् विवेकत्रिपाठी ज्योतिषाचार्यद्वितीयवर्षीयः छात्रः। यू.जी.सी. नेट् परीक्षामुत्तीर्णाः महेशभट्टः, शशाङ्कभट्टः, तिलकरामः, नवीनः के.आर्. च।

भोपालपरिसरे प्रवृत्तायामन्तःपरिसरीयनाटकस्पर्धायां वीरपृथ्वीराजनाटकमभिनीय प्रथमस्थानं प्राप्नोत् राजीवगान्धीपरिसरस्य अभिनेतृच्छात्रदलम्। अन्तःपरिसरीयनाट्यमहोत्सवे प्रथमपुरस्कारं गृह्णत् राजीवगान्धीपरिसरस्य अभिनेतृदलं समार्गदर्शकम्।

परिसरवार्ताः

## जयपुरपरिसरवार्ता

परिसरवार्ताः





**अन्ताराष्ट्रियमहिलादिवससमारोहः-** जयपुरपरिसरस्य राष्ट्रिय-सेवायोजनापक्षतः अन्ताराष्ट्रियमहिलादिवससमारोहः महता वैभवेन समायोजितः, अवसरेऽस्मिन् परिसरसदस्याः समुपस्थिताः अभूवन्।

**राष्ट्रीय-मतदातृ-दिवसः-**परिसरे राष्ट्रीय-मतदातृ-दिवसः आयोजितः अभवत्, यत्र परिसरनिदेशिका प्रो. भगवतीसुदेशमहोदया सभां सम्बोधितवती।

**गणतन्त्रदिवसः-** गणतन्त्रदिवसे समवेतान् जयपुरपरिसरस्य प्राध्यापकान् छात्रांश्च निदेशकमहोदया प्रो. भगवतीसुदेशमहोदया सम्बोधितवती।

**समायोजिता राज्यस्तरीयशास्त्रीयस्पर्द्धा-** परिसरे राजस्थान-राज्यस्तरीयशास्त्रीयस्पर्द्धा समायोजिता, यत्र निदेशिका प्रो. भगवती-सुदेशः निर्णायकानां सम्माननं कृतवती।

**कुलपतिमहोदयानां संवादः-** जयपुरपरिसरस्य हिन्दकेसरीसभागृहे केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतयः प्रो. श्रीनिवासवरखेडि-महोदयाः छात्रैः सह संवादमकुर्वन्।

**विशेषशिबिरम्-** जयपुरपरिसरस्य राष्ट्रियसेवायोजनापक्षतः समायोजिते विशेषशिबिरे शिबिरार्थिभ्यः आन्तरिकगुणवत्तासंवर्धन-प्रकोष्ठस्य निदेशकाः प्रो. सुदेशकुमारशर्माणः, शिक्षाशास्त्र-विभागस्य अध्यक्षाः प्रो. वाय. एस. रमेशमहोदयाः, संयोजकः डॉ. शीशराममहोदयश्च मार्गदर्शनं कृतवन्तः।

**राष्ट्रियबलिदानदिवसः-** राष्ट्रियसेवायोजनापक्षतः समायोजिते राष्ट्रियबलिदानदिवसे डॉ. शीशरामः, प्रो. कुलदीपशर्मा, डॉ. आशुतोषपन्तः, प्रो. फतेहसिंहः प्रो. श्रीधरमिश्रप्रभृतयः विद्वांसः छात्रान् एतद्विषये उद्बोधितवन्तः।

**जनजागरणाय शोभायात्रा-** परिसरस्य राष्ट्रियसेवायोजनापक्षतः डॉ. सीमाअग्रवालमहोदयायाः संयोजकत्वे अन्ताराष्ट्रिय-बाजरावर्ष-प्रसंगे जनजागरणायशोभायात्रा जयपुरमहानगरे समायोजिता।

**सूर्यनमस्कारकार्यक्रमः-** सूर्यसप्तम्यवसरे जयपुरपरिसरे सामूहिकसूर्यनमस्कारस्य कार्यक्रमः प्रो. वाय.एस्. रमेशमहोदयानां मुख्यातिथ्ये, परिसरनिदेशकमहोदयायाः आध्यक्ष्ये, योगप्राध्यापकस्य श्रीनवनीतकुमारस्य च संयोजकत्वे सम्पन्नः।



**राष्ट्रिययुवदिवसः-** स्वतन्त्रतायाः अमृतमहोत्सवे स्वामी-विवेकानन्दजयन्त्यवसरे जयपुरपरिसरे राष्ट्रिययुवदिवसस्य आयोजनं प्रो. रामकुमारशर्मणः मुख्यातिथ्ये परिसरनिदेशिकायाः प्रो. भगवती-सुदेशमहोदयायाः आध्यक्ष्ये सम्पन्नम्।

**वसन्तपञ्चम्यवसरे सरस्वतीपूजनम्-** वसन्तपञ्चम्यां परिसरस्य निदेशकमहोदयाः, प्राध्यापकाः छात्राश्च सरस्वतीपूजनं कृतवन्तः ।

**छात्रोपलब्धिः**

बेंगलुरूनगरे समायोजितायाम् अखिलभारतीयशास्त्रीयस्पर्धायां शास्त्रार्थविचारे प्रथमं द्वितीयं च स्थानं, अष्टाध्यायीकण्ठपाठस्पर्द्धायां प्रथमं, काव्यकण्ठपाठे प्रथमं धातुकण्ठपाठे चापि प्रथमं स्थानं प्राप्य जयपुरपरिसरस्य नेतृत्वे राजस्थानराज्येण द्वितीयं स्थानं सम्प्राप्तम्।

## भोपालपरिसरवार्ता



**विशिष्टव्याख्यानम् –** भोपालपरिसरे व्यक्तित्वसंवर्धनप्रकोष्ठद्वारा आयोजितव्याख्यानमालायां 25 जनवरी, 2022 तमे दिनाङ्के "व्यक्तित्वविकासाय संस्कृतज्ञानस्य समाजस्य कृते योगदानम्" इति विषयमवलम्ब्य संस्कृतभारत्याः अखिलभारतीय महामन्त्रिणः श्रीश्रीशदेवपुजारिमहोदयस्य विशिष्टव्याख्यानम् आभासीयमाध्यमेन आयोजितम्। एतदवसरे केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतिना प्रो. श्रीनिवासवरखेडीमहोदयेन अपि व्यक्तित्वविकासाय संस्कृत-ज्ञानस्य उपादेयता सन्दर्भे निगदितम्। कार्यक्रमस्य अध्यक्षता भोपालपरिसरस्य निदेशकेन प्रो. जे. भानुमूर्तिमहोदयेन कृता।

**त्रिदिवसीयान्ताराष्ट्रियशोधसङ्गोष्ठी –**भोपालपरिसरस्य ज्योतिष-विभागः ज्योतिषविश्वकोष मोबाइल एप्-इत्यनयोः संयुक्त-तत्त्वावधानेन त्रिदिवसीयान्ताराष्ट्रियशोधसङ्गोष्ठ्या आयोजनमभवत्। अस्याः उद्घाटनावसरे मुख्यातिथित्वेन मध्यप्रदेशसर्वकारस्य राज्यपालमहोदयो महामहिम-मंगुभाईपटेल आसीत्। विश्वविद्यालयस्य कुलपतिः प्रो. श्रीनिवासवरखेडी प्रधानसंरक्षकत्वेन उपस्थिताः आसन्। इयं शोधसंगोष्ठी "वैवाहिकजीवनस्य समस्या समाधानञ्च" इति विषयमधिकृत्य आयोजिता आसीत्। इयं संगोष्ठी अष्टादशदिनाङ्के समाप्तिमगात्। कार्यक्रमस्य अध्यक्षता परिसरस्य प्रभारिनिदेशकेन प्रो. हंसधरझामहोदयेन कृता।

**राज्यस्तरीयशास्त्रीयस्पर्धा 2021-22 –** भोपालपरिसरे मार्चमासस्य 06-07 तमदिनाङ्कयोः मध्यप्रदेशच्छत्तीसगढयोः राज्यस्तरीय-शास्त्रीयस्पर्धा आयोजिता। अस्मिन्नवसरे विषयविशेषज्ञरूपेण केन्द्रीयसंस्कृतविश्वविद्यालयस्य लखनऊपरिसरस्य प्रो. धनीन्द्रझामहोदयः, तथा जयपुरपरिसरस्य प्रो. श्यामदेवमिश्रमहोदयः उपस्थितौ आस्ताम्। कार्यक्रमस्य अध्यक्षता परिसरनिदेशकेन प्रो. जे.भानुमूर्तिमहोदयेन कृतम्।

**अन्ताराष्ट्रियमहिलादिवसः –** भोपालपरिसरे 8 मार्च 2022 तमे दिनाङ्के अन्ताराष्ट्रियमहिलादिवस आयोजितोऽभूत्, यत्र मुख्यातिथित्वेन हार्टफुलनेस इन्स्टीट्यूट पक्षतः डॉ. श्रीमती नीतू खरे उपस्थिताऽऽसीत्। कार्यक्रमस्य अध्यक्षता परिसरनिदेशकेन प्रो. जे. भानुमूर्तिमहोदयेन कृता। अस्मिन्नवसरे विशिष्टमहिलानां सम्माननमपि मुख्यातिथीनां करकमलाभ्यामभूत्। राष्ट्रीयसेवायोजनापक्षतः आयोजितस्यास्य कार्यक्रमस्य संयोजनं डॉ. रजनी-डॉ. रजनी वी.जी.महोदयाभ्यां कृतम्।

**राष्ट्रीयसेवायोजनापक्षतः सप्तदिवसीयं विशिष्टशिविरम् –** परिसरे राष्ट्रीयसेवायोजनापक्षतः सप्तदिवसीयं विशिष्टशिविरं 27 मार्च 2022 दिनाङ्कादारभ्य 2 अप्रैल 2022 दिनाङ्कपर्यन्तं मध्यप्रदेशस्य बगरोदाग्रामे सुसम्पन्ना। शिविरस्योद्घाटनोत्सवे मुख्यातिथिरूपेण बगरोदाग्रामस्थ-शासकीयोच्चतरमाध्यमिकविद्यालयस्य प्राचार्यः श्रीविजयकुमारबड़करमहोदय उपस्थित आसीत्। अस्मिन् शिविरे 25 स्वयंसेवकाः प्रतिभागितामकार्षुः, यैः ग्रामेऽस्मिन् स्वच्छतासाक्षरतादीन् प्रति जागरुकता प्रसारिता। कार्यक्रमाधिकारिणा डॉ. राकेशकुमारवर्मणा अस्य शिविरस्य संयोजनं कृतम्।

**प्रो. जे. भानुमूर्तिमहोदयाभिनन्दनम् आचार्यसुबोधशर्म-महोदयस्य निदेशकपदग्रहणं च –** मार्चमासस्य 31तमे दिनाङ्के भोपालपरिसरे निदेशकपदमलङ्कुर्वाणानां प्रो. जे. भानुमूर्ति-महोदयानां सेवानिवृत्तिर्जाता। अवसरेऽस्मिन् प्रो. जे. भानुमूर्ति-महोदयानां सत्काराभिनन्दनकार्यक्रमः समायोजितः। सर्वैरपि आचार्यैः श्रीमतः भानुमूर्तिमहोदयान् प्रतिभावपुष्पाञ्जलयः समर्पिताः। तेषां सेवानिवृत्तेः समनन्तरमेव परिसरस्य वरिष्ठाचार्याः व्याकरण-विभागाध्यक्षाश्च प्रो. सुबोधशर्ममहोदयाः निदेशकपदम-लङ्कृतवन्तः।



# अगरतलास्थ-एकलव्यपरिसरवार्ता

**विशिष्टव्याख्यानानि** – 28.03.2022 तमे दिनाङ्के अन्तर्जाल-माध्यमेन मणिद्राविडशास्त्रिपादानां विशिष्टव्याख्यानमायोजितम्। अस्मिंश्च कार्यक्रमे विशिष्टातिथिपदमलङ्कृतवन्तः व्याकरणादि-शास्त्रेषु पारङ्गताः आजादमिश्रमहाभागाः। कार्यक्रमे चास्मिन् निदेशकाः प्रो. सुकान्तकुमारसेनापतिमहाभागा अध्यक्षपदं विभूषितवन्तः।




परिसरस्य व्याकरणविभागेन अमृतमहोत्सवमुपलक्ष्य 'वर्तमानसन्दर्भे श्रीमद्भागवतस्य प्रासङ्गिकता' इत्यस्मिन् विषये 31.03.2022 तमे दिनाङ्के अन्तर्जालमाध्यमेन व्याकरणादिशास्त्रेषु, निष्णातानां प्रो. हरेकृष्णमहापात्रमहोदयानां विशिष्टव्याख्यानं समायोजितम्। कार्यक्रमे चास्मिन् परिसरनिदेशकाः सुकान्तकुमार-सेनापतिमहाभागा अध्यक्षपदं विभूषितवन्तः। कार्यक्रमेऽस्मिन् परिसरस्य सर्वे अध्यापकाः देशस्य शताधिकविद्वांसश्च भागं गृहीतवन्तः। कार्यक्रमस्य संयोजकः डॉ. गणेश्वरनाथझाः, सहसंयोजकः डॉ. विजयकुमारपयासी च आस्ताम्।




परिसरस्य साहित्यविभागेन वासन्ती-व्याख्यानमाला समायोजिता। अस्याः व्याख्यानमालायाः साहित्यस्य प्रथमपुष्पगुम्फनं 28.02.2022 दिनाङ्के आभासीयमाध्यमेन समभवत्। तत्र हि विशिष्टवक्तृरूपेण समुपस्थिता आसन् आचार्याः चक्रवर्तिरङ्गनाथन्-वर्याः, विशिष्टातिथिरूपेण समुपस्थिताः कविकुलगुरुकालिदास-संस्कृतविश्वविद्यालयस्य कुलगुरवः प्रो. मधुसूदनपेन्नावर्याः। अस्याः व्याख्यानमालायाः संयोजिका डॉ. मञ्जुठेमदेवचन्ने समेषां स्वागतं व्याहृतवती।

परिसरस्य आधुनिकविभागेन आभासीयमाध्यमेन 18.02.2022 तमे दिनाङ्के विशिष्टव्याख्यानं समायोजितम्। तत्र मुख्यवक्तृरूपेण दशरथदेब-महाविद्यालयस्य आचार्यः बाबुरामस्वामी, लखनऊपरिसरस्य हिन्दीविभागाध्यक्षः प्रो. शिशिरकुमार-पाण्डेमहाभागः निदेशकः प्रो. सुकान्तकुमारसेनापतिः च उपस्थिताः आसन्।

धर्मशास्त्रविभागे 10.03.2022 तमे दिनाङ्के 'तीर्थाटनम्' इति विषयमधिकृत्य विशिष्टव्याख्यानं समन्वतिष्ठत्। तत्र मुख्यवक्तारः उत्कलराज्यस्य पुरीस्थश्रीजगन्नाथ-संस्कृतविश्वविद्यालयस्य धर्मशास्त्रविभागाध्यक्षचराः प्रो. ब्रजकिशोरस्वाइँ महाभागाः, अध्यक्षाः परिसरनिदेशकाः प्रो. सुकान्तकुमारसेनापतिमहाभागाः च आसन्।

परिसरस्य ज्योतिषविभागेन ज्योतिषव्याख्यानमाला समारब्धा। इयं व्याख्यान-माला फरवरीमासात् अगस्तमासं यावत् प्रवर्त्स्यति। अस्याः व्याख्यानमालायाः प्रथम-व्याख्यानम् 12.02.2022 तमे दिनाङ्के अपराह्णे अन्तर्जालमाध्यमेन अभवत्। कार्यक्रमेऽस्मिन् मुख्यातिथिरूपेण राष्ट्रपतिपुरस्कारभाजः संस्कृतविज्ञानधर्मविद्यासंकायस्य पूर्वप्रमुखाः प्रो. रामचन्द्रपाण्डेयमहाभागाः समुपस्थिताः आसन्। व्याख्यानमालायाः द्वितीयं व्याख्यानं 31.03.2022 तमे दिनाङ्के सम्पन्नम्, तत्र जयपुरपरिसरस्य ज्योतिषविभागस्य आचार्यः प्रो. श्यामदेवमिश्रवर्यः व्याख्यानं प्रादात्।

**अन्ताराष्ट्रीयमहिलादिवसः** – 08.03.2022तमे दिवसे परिसरेण अन्ताराष्ट्रीयमहिलादिवसः आचरितः। अध्यक्षपदम् अलंकृतवन्तः परिसरनिदेशकाः प्रो. बच्चाभारतीमहोदयाः। कार्यक्रमेऽस्मिन् मुख्यातिथिरूपेण आसन्-परिसरस्याऽस्य धर्मशास्त्रविभागस्य प्राध्यापिका: डॉ. इतिश्रीमहापात्रमहाभागाः विशिष्टातिथिरूपेण विराजमानाः आसन् परिसरस्य साहित्यविभागाध्यक्षा डॉ. मञ्जुठेमदेव-चन्नेमहाभागा।

**शिक्षाशास्त्रिच्छात्राणां कृते समायोजिताः विविधाः कार्यशालाः –** परिसरीयशिक्षाशास्त्रविभागेन 01.02.2022 तः 10.02.2022 पर्यन्तं शिक्षाशास्त्रिप्रथमवर्षीयछात्रेभ्यः भाषाबोधनवर्गकार्यशाला समायोजिता। शिक्षाशास्त्रविभागेन 04.03.2022 तः 07.03.2022 पर्यन्तं शिक्षाशास्त्रिद्वितीयवर्षीयछात्रेभ्यः योगप्रशिक्षणकार्यशाला समायोजिता। शिक्षाशास्त्रविभागेन 15.03.2022 तः 16.03.2022 पर्यन्तं शिक्षाशास्त्रिद्वितीयवर्षीयछात्रेभ्यः संगणकप्रशिक्षणकार्यशाला समायोजिता। शिक्षाशास्त्रविभागेन 08.03.2022 तः 11.03.2022 पर्यन्तं शिक्षाशास्त्रिद्वितीयवर्षीयछात्रेभ्यः कलाशिल्पप्रशिक्षणकार्यशाला समायोजिता।

**पराक्रमदिवसः –** परिसरस्य राष्ट्रियसेवायोजनया 23.01.2022 तमे दिनाङ्के पराक्रमदिवसः आचरितः। आभासीयेऽस्मिन् कार्यक्रमे अध्यक्षपदं वहन्ति स्म परिसरनिदेशिका: प्रो. बच्चाभारतीमहोदयाः। पराक्रमदिवसे मुख्यातिथिपदं वहन्ति स्म राजस्थानस्य उच्चौनस्य सर्वकारीयमहाविद्यालयस्य प्राचार्याः डॉ.धर्मचन्दचौबेमहोदयाः।




**पूर्वोत्तरराज्यस्तरीयशास्त्रीयस्पर्धाः –** अखिलभारतशास्त्रीयस्पर्धाः पुरस्कृत्य पूर्वोत्तरराज्यस्तरीयशास्त्रीयस्पर्धाः 14.03.2022 तमे दिनांके एकलव्यपरिसरे समायोजिता अभवन्। अस्मिन् कार्यक्रमे मुख्यातिथिरूपेण अगरतलास्थस्य महाराजवीरविक्रमविश्व-विद्यालयस्य कुलपतयः प्रो. सत्यदेवपोद्दारमहाभागाः समुपस्थाय 'अद्यत्वे संस्कृतभाषायाः प्रचारप्रसारः नितान्तमावश्यकः वर्तते' इत्यवदन्। अध्यक्षरूपेण परिसरनिदेशकाः प्रो. सुकान्तकुमार-सेनापतिमहाभागाः समुपस्थिताः।

**विवेकानन्दस्य जन्मदिवसः –** राष्ट्रियसेवायोजनया 12.01.2022 तमे दिनाङ्के स्वामिविवेकानन्दस्य जन्मदिवसः राष्ट्रिययुवदिवसत्वेन परिपालितः। कार्यक्रमोऽयम् अन्तर्जालमाध्यमेन सम्पन्नः। अत्र अध्यक्षपदं विभूषितवन्तः परिसरनिदेशकाः प्रो. रणजितकुमारबर्मन्महोदयाः। विशिष्टातिथिपदम् अलंकुर्वाणा आसन् शिक्षाशास्त्रविभागस्य आचार्याः प्रो. बच्चाभारतीमहोदयाः।

## लखनऊपरिसरवार्ता

**राष्ट्रियमतदातृदिवसः–** 25.01.2022 तमे दिनाङ्के परिसरे राष्ट्रिय-मतदातृ-दिवसस्यायोजनं सोत्साहं जातम्। अवसरेऽस्मिन् ऑनलाईनमाध्यमेन मतदातृजागरुकताविषये प्रो. एम. चन्द्रशेखरमहोदयानां विशिष्टव्याख्यानयुता एका संगोष्ठी अपि आयोजिता अभूत्। परिसरीयनिदेशकस्याध्यक्ष्ये परिसरीयसदस्यैः शपथग्रहणं कृतम्। अस्य कार्यक्रमस्य संयोजनं साहित्यविभागीय-सहायकाचार्येण डॉ. प्रफुल्लगडपालेन विहितम्।

**गणतन्त्रदिवसः–** 26.01.2022 तमे दिनाङ्के परिसरे गणतन्त्रदिवसः समाचरितः। अवसरेऽस्मिन् परिसरनिदेशकाः आचार्याः सर्वनारायणझामहोदयाः सर्वान् परिसरसदस्यान् गणतन्त्रस्य महत्त्वं कर्तव्यानि च उद्बोधितवन्तः।

**कुलपतिमहोदयानां परिसरे समागमनम्–** नूतनकुलपतिवर्याः आचार्यश्रीनिवासवरखेडीमहोदयाः परिसरम् आगत्य परिसरसदस्यैः सह मेलनं संवादं चाकुर्वन्।

**मातृभाषादिवसः–** 21 फरवरी, 2022 तमे दिनाङ्के परिसरे अन्ताराष्ट्रियमातृभाषादिवसः आयोजितोऽभूत्। अवसरेऽस्मिन् एका ऑनलाईनसंगोष्ठी आयोजिता, यत्र प्रो. एम. चन्द्रशेखरमहोदयः विशिष्टं व्याख्यानं प्रदत्तवन्तः। अस्य कार्यक्रमस्य संयोजनं डॉ. प्रफुल्लगडपालः अकरोत्।

**राष्ट्रियशिक्षानीतिकार्यशाला–** परिसरनिदेशकानां प्रो. सर्वनारायणझामहोदयानां समन्वयकत्वेन राष्ट्रियशिक्षानीतिसम्बन्धिनी कार्यशाला सम्पन्ना। अस्यां च कार्यशालायां नवशिक्षानीतेः अनुसारेण पाठ्यक्रमाणां निर्माणं विद्वद्भिः कृतम्।

**छात्रप्रातिभम्–** 21.02.2022 तमे दिनाङ्के श्रीरणवीरपरिसरेण समायोजिते मातृभाषादिवसमुपलक्ष्य परिसरीया आचार्यकक्ष्यायामधीयाना सुश्रीः विभामिश्रा काव्यपाठमकरोत्।

## जम्मूस्थ-श्रीरणवीरपरिसरवार्ता

**अन्ताराष्ट्रियव्याकरणशोधसंगोष्ठी-** श्रीरणवीरपरिसरेण अन्ताराष्ट्रियव्याकरणशोधसंगोष्ठी समायोजिता, यत्र उद्घाटनसत्रे बनारसहिन्दूविश्वविद्यालयस्य वरिष्ठाचार्याः मुख्यातिथित्वं निरवहन्। तत्रैव ज्यूरिस्थविश्वविद्यालयस्य विशिष्टविद्वान् श्रीसौरवअब्बी-महोदयः आसीत्। समापनसत्रे मुख्यातिथिरूपेण श्रीला.ब.शा.रा.सं.विश्वविद्यालयस्य वरिष्ठाचार्याः प्रो. रामसलाहीद्विवेदिनः मुख्यातिथिपदमलङ्कृतवन्तः। तत्रैव श्रीराजीवगान्धिपरिसरस्य वरिष्ठाचार्याः डॉ. चन्द्रशेखरभट्टमहाशयाः विशिष्टातिथित्वेन आसन्। सत्रद्वयस्य आध्यक्ष्यं परिसरनिदेशकाः आचार्याः प्रो. मदनमोहन-झावर्याः निरवहन्। अत्र शताधिकाः पत्रवाचकाः शोधपत्राणि प्रस्तुतवन्तः 145 सहभागिनः च भागं गृहीतवन्तः।



**पत्रिके यू.जी.सी. केयरसूच्यां सङ्गृहीते-** परिसरस्य श्रीवैष्णवीति वार्षिकपत्रिका, शिक्षाशास्त्रविभागस्य शिक्षामृतमिति पत्रिका च यू. जी.सी. केयरसूच्यां सङ्गृहीते।

**सूर्यनमस्कारकार्यक्रमः-** 14.01.2022 तमे दिनाङ्के श्रीरणवीर-परिसरे मकरसङ्क्रान्तौ सूर्यनमस्कारकार्यक्रमः स्वातन्त्र्य-महोत्सवस्योपलक्ष्ये माघसप्तमीतिथौ आयोजितम्।

**राष्ट्रिय-मतदातृ-दिवसः-** 25.01.2022 तमे दिनाङ्के परिसरे राष्ट्रिय-मतदातृ-दिवसस्यायोजनं सोत्साहं कृतम्। अवसरेऽस्मिन् परिसरीय-निदेशकस्याध्यक्ष्ये परिसरीयसदस्यैः शपथग्रहणं कृतम्।

**मातृभाषादिवसः-** 21 फरवरी, 2022 तमे दिनाङ्के मातृभाषादिवसः समायोजितः। तत्र प्रसिद्धा डोगरीगायिका सीमासहगलमहोदया मुख्यातिथित्वेन समागता।



**राज्यस्तरीयशास्त्रीयस्पर्धा-** 01.03.2022 तमे दिनाङ्के श्रीरणवीरपरिसरे राज्यस्तरीयशास्त्रीयस्पर्धायाः आयोजनमभवत्।

**अन्ताराष्ट्रियमहिला-दिवसः-** 08.03.2022 तमे दिनाङ्के अन्ताराष्ट्रियमहिला-दिवसः आयोजितः, तत्र परीसरीयमहिलानां सम्माननमभूत्।

**'डोगरी-चित्रकोष' ( App ) विमोचनम्-** 15.03.2022 तमे दिनाङ्के 'डोगरी-चित्रकोष' इत्यस्यानुप्रयोगस्य (App) विमोचनमभूत्।

**छात्रोपलब्धयः-** अष्टादशान्तःपरीसरीयनाट्यमहोत्सवे परिसरस्य छात्रैः स्वातन्त्र्यशौर्यमिति नाटकस्याभिमञ्चनं कृतं तृतीयस्थानं च प्राप्तम्। अत्र सर्वदर्शनविभागीयच्छात्रः अनीषसनमोत्रा सर्वोत्तमनायकस्य पुरस्कारं प्राप्तवान्। परिसरस्तरे अनीषसनमोत्रा प्रथमम्, अमनसढोत्रा द्वितीयम्, सुमितशर्मा च तृतीयं स्थानं प्राप्तवन्तः।




59तम्याम् अखिलभारतीयशास्त्रीयस्पर्धायां परिसरच्छात्रैः संजीवकुमारः प्रीक्षितशर्मा च शास्त्रीयस्फूर्तिस्पर्धायां रजतपदकं प्राप्तवन्तौ। विकासशर्मा धातुकण्ठपाठस्पर्धायां विशिष्टपुरस्कारं, माधवशर्मा च गीताकण्ठपाठस्पर्धायां विशिष्टपुरस्कारं प्राप्तवन्तौ।

प रि स र वा र्ताः

## बलाहरस्थ-वेदव्यासपरिसरवार्ता

**आवासीयभाषाबोधनवर्गः-** संस्कृतभारतीहिमाचलप्रदेशद्वारा 01.01.2022 तः 10.01.2022 दिनाङ्कं यावत् चम्बाजनपदे आयोजिते दशदिवसीयभाषाबोधनवर्गे परिसरस्य 42 छात्राः संस्कृतप्रचारमञ्चपक्षतः डॉ. पुरुषोत्तमशर्मा डॉ. प्रतिज्ञा आर्या च दशदिनानि यावत् भागमगृह्णन्। अपरस्मिन् एव अवधौ सोलनस्थे नालागढे आवासीयवर्गे परिसरस्थाः प्रायेण 22 छात्राः डॉ. प्रदीपशर्मा च पूर्णतया दशदिनानि डॉ. सत्यदेवः च आरम्भिकदिनत्रयं यावत् भागमगृह्णन्।




**गणतन्त्रदिवसाचरणम्-** वेदव्यासपरिसरेण 26.01.2022 तमे दिनाङ्के गणतन्त्रदिवसस्याचरणं विहितम्, यस्मिन् परिसरस्य सर्वे अपि प्राध्यापकाः उपस्थिताः आसन्। कार्यक्रमेऽस्मिन् विशिष्ट-संस्थाद्वारा समुपस्थितेभ्यः प्रेरणात्मकम् उद्‌बोधनं कृतम् आयोजितम्।

**शहीददिवसाचरणम्-**परिसरीय-राष्ट्रियसेवायोजनया 23 मार्च, 2022 तमे दिनाङ्के बलाहरतः मसोटग्रामपर्यन्तं शोभायात्रा विहिता। मसोटग्रामे हुतात्मनः श्री-अजयजसवालस्मारकस्थले शहीददिवसस्य आचरणं विहितम्। यस्मिन् परिसरस्य सर्वे अपि छात्राः उपस्थिताः आसन्। कार्यक्रमस्यास्य संयोजकः डॉ. मुकेशशर्मा अध्यक्षश्च आई.क्यू.ए.सी. संयोजकः प्रो. सुब्रह्मण्यमवर्यः अवर्तत।

**अन्ताराष्ट्रियमहिलादिवसाचरणम्-**परिसरेण 08 मार्च, 2022 तमे दिनाङ्के अन्ताराष्ट्रिय-महिलादिवसाचरणं विहितम्, यस्मिन् प्रबन्धिका (सेण्ट्रल बैंक ऑफ् इण्डिया) विशिष्टातिथिरूपेण मुख्यातिथिरूपेण च प्रागपुरस्था श्रीमती कुसुमवालियामहोदया उपस्थिता आसीत्। कार्यक्रमोऽयं परिसरनिदेशकानां प्रो. लक्ष्मीनिवासपाण्डेयानाम् अध्यक्षत्वे वेदान्तविभागाध्यक्षाणां डॉ. मञ्जुनाथमहोदयानां समन्वयकत्वे च सम्पन्नः। अस्मिन् कार्यक्रमे सर्वे अपि परिसरसदस्याः, शोधच्छात्राः छात्राः च उपस्थिताः आसन्।

**राज्यस्तरीयशास्त्रीयप्रतियोगिता-**परिसरे महाविद्यालयानां राज्यस्तरीया शास्त्रीयप्रतियोगिता आयोजिता। अस्यां 04 महाविद्यालयानां 40 छात्राः भागमगृह्णन्। कार्यक्रमस्यास्य संयोजकः वेदान्तविभागाध्यक्षः डॉ. मञ्जुनाथ.एस्.जि. महोदयः आसीत्। प्रतियोगितायामस्यां होशियारपुरस्थविश्वविद्यालयस्य प्रो. एन्.सी. पण्डामहोदयः, केन्द्रीयविश्वविद्यालयधर्मशालातः संस्कृतविभागाध्यक्षः डॉ. बृहस्पति-मिश्रमहोदयः च निर्णायकत्वेन उपस्थितौ आस्ताम्।

**शोधमार्गदर्शनम्-**परिसरेण 01.01.2022 तः 31.03.2022 इत्यवधौ 05 प्रविष्टानां नूतनशोधच्छात्राणां मार्गदर्शनं विहितम्। अथ च 05 शोधच्छात्रैः स्वीयः शोधप्रबन्धः एतस्मिन् अवधौ समर्पितः। अद्यावधिपर्यन्तं परिसरे अस्मिन् 19 शोधच्छात्राः उपाधिं लब्धवन्तः। 56 शोधार्थिनः च परिसरे अस्मिन् शोधकार्यं सम्पादितवन्तः सम्पाद्यमानाः च वर्तन्ते।

**परियोजनाः-**वेदव्यासपरिसरे भारतीयज्ञानपरम्परान्तर्गतं परियोजनाद्वयं स्वीकृतं वर्तते। एका तु तैत्तीरियोपनिषदः सस्वरपाठेन मनोवैज्ञानिकप्रभावः अपरा च भारतीयकालगणनाधारेण पञ्चाङ्गनिर्माणम् इति विषयाधारितं वर्तेते।

### छात्रोपलब्धयः

**अन्तःपरिसरीय-संस्कृतनाट्यस्पर्धा-**22-24 मार्च, 2022 दिनाङ्केषु भोपालपरिसरे अन्तःपरिसरीयसंस्कृतनाट्यस्पर्धायां वेदव्यासपरिसरपक्षतः 28 छात्रैः भागग्रहणं विहितम्। "मिवारप्रतापम्" (1-3 अङ्काः) इत्यस्य नाटकस्य अङ्कत्रयमाधारीकृत्य परिसरच्छात्रैः डॉ. पुरुषोत्तमशर्मणः मार्गदर्शकत्वे श्रीविनोदशर्मणः मार्गदर्शकत्वे निर्देशकत्वे च स्पर्धायामस्याम् अतिविशिष्टपुरस्कारः लब्धः।

**खेल-योगासन-राष्ट्रियस्तरप्रतियोगिता-**मार्चमासस्य 26-29 दिनांकेषु 46तमी वरिष्ठ-राष्ट्रिय-खेल-योगासनप्रतियोगिता आन्ध्रप्रदेशराज्ये 'ताडेपल्लिगुडेम्पश्चिमगोदावरी' इत्यस्मिन् स्थाने आयोजिता। यत्र वेदव्यासपरिसरपक्षतः वैजयन्तीमाला, मनीषः, चिरागशर्मा, आरती, साहिलः च इत्येते पञ्च छात्राः भागमगृह्णन्। यत्र च परिसरच्छात्रैः उच्चतमेषु विंशतितमं स्थानमवाप्तम्।

**अखिलभारतीयशास्त्रीयस्पर्धा-**केन्द्रीयसंस्कृतविश्वविद्यालयेन 27-30 मार्च, 2022 इत्यवधौ बेङ्गलूरुस्थे कर्णाटकसंस्कृतविश्वविद्यालये अखिलभारतीयशास्त्रीयस्पर्धा आयोजिता, यत्र परिसरपक्षतः डॉ. दीपकुमारस्य मार्गदर्शकत्वे दीपिकाकौशलः, साहिलशर्मा, मुकेशकुमारः, चान्दप्रकाशः च इत्येते चत्वारः छात्राः भागमगृह्णन्। कार्यक्रमेऽस्मिन् छात्राणां समेषामपि प्रस्तुतिः सन्तुष्टिप्रदा अवर्तत।

परिसरवार्ताः

**राज्यस्तरीयस्पर्धा**–हिमाचलप्रदेशस्य सुन्दरनगरस्थे संस्कृतमहाविद्यालये हिमाचल–संस्कृताकादम्या 29–30 मार्च, 2022 तमयोः दिनांकयोः आयोजितायां राज्यस्तरीयस्पर्धायां परिसरस्य 16 छात्रैः सोत्साहं भागग्रहणं कृतम्। परिसरतः मार्गदर्शकत्वेन डॉ. प्रतिज्ञा–आर्या– डॉ. पङ्कजौ समन्वयकत्वेन, डॉ. मुकेशशर्मा च उपस्थितौ आस्ताम्। अत्र च प्रश्नोत्तरीस्पर्धायां, सद्योभाषणस्पर्धायां सूत्रान्त्याक्षरीस्पर्धायाञ्च प्रथमस्थानं, संस्कृतभाषणवेदपाठस्पर्धायाञ्च द्वितीयस्थानं, श्लोकोच्चारणनाटिकास्पर्धायां च तृतीयं स्थानम् अवाप्य चलवैजयन्तीम् अलभन्त।

**अखिलभारतीया अन्तर्विश्वविद्यालयीया मल्लयुद्धस्पर्धा**–वेदव्यासपरिसरस्य शास्त्रिप्रथमवर्षस्य छात्रः आयुषः हरियाणाराज्ये सिरसानगरे आयोजितायाम् अखिलभारतीय–अन्तःविश्वविद्यालयीय–मल्ल–युद्धस्पर्धायां भागग्रहणम् अकरोत्।



**प्रान्तसम्मेलनम्**–संस्कृतभारतीहिमाचलप्रदेशद्वारा 26–27 फरवरी, 2022 इत्यवधौ अग्रवालधर्मशाला–ज्वालामुख्यां द्विदिवसीयं प्रान्तकार्यकर्तृसम्मेलनम् आयोजितम्, यत्र परिसरस्य संस्कृतप्रचारमञ्चपक्षतः 28 छात्रैः डॉ.पुरुषोत्तमस्य श्रीविनोदस्य च मार्गदर्शने "भारतविजयम्" इति शीर्षकान्वितं नाटकं प्रस्तुतम्।

**अन्यसंस्थाभ्यः छात्रवृत्तिः**–परिसरे ज्योतिषविभागे प्रो. पी.वी.बी. सुब्रह्मण्यमस्य मार्गदर्शकत्वे शोधरता शोधच्छात्रा सुश्रीवैजयन्तीमाला आई.सी. एस्.एस्.आर्. इति संस्थापक्षतः शोधकार्यमुद्दिश्य छात्रवृत्त्यै चिता वर्तते।

## देवप्रयागस्थ–रघुनाथकीर्तिपरिसरवार्ता

**वार्ताप्रसारणम्**– 05.01.2022 तमे दिनाङ्के देहलीदूरदर्शनदलेन परिसरपरिचयविषयकः साक्षात्कारकार्यक्रमो विहितः, यस्य राष्ट्रीयवार्ताप्रसारणमपि जातम्।



**मतदातृदिवसः**– 25.01.2022 तमे दिनाङ्के परिसरसदस्यैस्सह मतदातृशपथाचरणं कृतम्।

**गणतन्त्रदिवसः**– 26.01.2022 तमे दिनाङ्के निदेशकेन ध्वजारोहणं कृतम् अत्र उद्बोधनञ्च सञ्जातम्।

**शारदार्चनम्**– 05.02.2022 तमे दिनाङ्के प्रो. विजयपालशास्त्रि–महोदयस्य निर्देशने परिसरीयप्राध्यापकैः कर्मचारिभिः छात्रैश्च साकं समाचरितम् श्रीवसंतपञ्चमीशुभावसरे शारदार्चनम्।

**पौरोहित्यप्रशिक्षणवर्गः**– 08.03.2022 तमे दिनाङ्के पौरोहित्यप्रशिक्षणवर्गस्योद्घाटने परिसरनिदेशकेन आध्यक्षीयम् उद्बोधनं कृतम्।

**संस्कृतसम्भाषणवर्गः**– मार्चमासे 27 दिनाङ्कतः सप्तदिवसात्मकः संस्कृत–सम्भाषणवर्गः परिसरे समारब्धः।



**छात्रोपलब्धिः**–नाट्यमहोत्सवे परिसरस्य अष्टादशभिः छात्रैः भागः गृहीतः, यत्र परिसरः सङ्गीते प्रथमं स्थानं प्राप्तवान्। परिसरस्तरे मोहितशर्मा प्रथमं स्थानं प्राप्तवान्। मोनिकानौगाई द्वितीयं स्थानम् प्राप्तवती दिगम्बररतूडी च तृतीयं स्थानं लब्धवान्।

**अखिलभारतीयशास्त्रीयस्पर्धायां भागग्रहणम्**–डॉ. दिनेश–चन्द्रपाण्डेयस्य मार्गदर्शने बेंगलुरुनगरे प्रवृत्तायाम् अखिल–भारतीयशास्त्रीयस्पर्धायां परिसरीयाः छात्राः नैकासु प्रतियोगितासु भागमग्रहणं कृतवन्तः।

## पुरीस्थ-श्रीसदाशिवपरिसरवार्ता

परिसरवार्ताः

**समाचरितः मातृभाषादिवसः**-श्रीसदाशिवपरिसरे 21.02.2022 दिनाङ्के मातृभाषादिवसः महता वैभवेन परिपालितः। तत्र नैकेषाम् अतिथीनां सम्माननं विहितम्। मातृभाषामधिकृत्य स्वानुभवम् अतिथयः प्राकटयन्।

**सूर्यनमस्कारकार्यक्रमः**-मुख्यालयस्य निर्देशानुसारं सामूहिकः सूर्यनमस्कार-कार्यक्रमः समनुष्ठितः तत्र परिसरस्य अध्यापकाः छात्राश्च भागं गृहीतवन्तः।

**वार्षिकोत्सवः**-श्रीसदाशिवपरिसरे वार्षिकोत्सवकार्यक्रमः सोल्लासं परिपालितः तदङ्गतया विविधाः क्रीडास्पर्धाः आयोजिताः। सर्वासु स्पर्धासु छात्राः उत्साहेन भागं ग्रहितवन्तः।





**समायोजिता राष्ट्रियसङ्गोष्ठी**-श्रीसदाशिवपरिसरे 21.03.2022 तः 23.03.2022 दिनाङ्कं यावत् त्रिदिवसीया राष्ट्रिया सङ्गोष्ठी अक्षरपुरुषोत्तदर्शनं-दर्शनान्तरैस्सह संवादः इति विषयमाधारीकृत्य समायोजिता।

समुद्घाटनकार्यक्रमे मुख्यातिथिरूपेण महामहोपाध्यायः भद्रेशदास-स्वामिपादः समुद्घाटकरूपेण महामहिमगजपतिश्रीदिव्यसिंहदेव-महाराजः अध्यक्षरूपेण केन्द्रीयसंस्कृतविश्वविद्यालयस्य कुलपतिः श्रीनिवास वरखेडीवर्याः सारस्वतातिथिरूपेण तिरुपतिस्थ राष्ट्रिय-संस्कृतविश्वविद्यालयस्य कुलपतिचरः प्रो. हरेकृष्णशतपथिवर्यः श्रीसदाशिवपरिसरस्य निदेशकः प्रो. खगेश्वरमिश्रश्च समुपस्थिता आसन्।



**छात्रैः सह संवादः**-श्रीसदाशिवपरिसरे माननीयकुलपतिवर्यैः परिसरस्य छात्रैः सह संवादः विहीतः। तत्र छात्राणां याः समस्याः, तासां निवारणाय निर्देशः प्रदत्तः। सन्दर्भेऽस्मिन् स्मार्टक्लास इत्यस्य समुद्घाटनं सूर्यघटेश्च समुद्घाटनं विहितम्।






# मुम्बईस्थ-क.जे. सोमैयापरिसरवार्ता

**सूर्यनमस्कारकार्यक्रमः**-मुख्यालयस्य सूचनानुसारं परिसरेऽस्मिन् 27.01.2022 तः 07.02.2022 दिनाङ्कपर्यन्तं सामूहिक-सूर्यनमस्कारकार्यक्रमः समायोजितः। कार्यक्रमेऽस्मिन् योगगुरुः श्रीमान् सञ्जयसोलङ्कीमहोदयः उपस्थाय योगशिक्षणं सूर्यनमस्कारं च विशेषतया बोधितवान्। परिसरसदस्याः सामूहिकरूपेण सूर्यनमस्कारमकुर्वन्।



**गोवाराज्यस्तरीयशास्त्रीयवाक्स्पर्धा**-क. जे. सोमैयापरिसरेण गोवाराज्यस्य रिवोनस्थश्रीविद्यापाठशालायाः सहयोगेन गोवा-राज्यस्तरीयशास्त्रीयवाक्प्रतिस्पर्धा 05.03.2022 तमे दिनाङ्के परिसरनिदेशकानां प्रो. भारतभूषणमिश्रवर्याणामाध्यक्ष्ये समायोजिता। अस्यां स्पर्धायां मुख्यातिथिरूपेण उज्जैनस्थ-पाणिनिसंस्कृतवैदिक-विश्वविद्यालयस्य निदेशकः डॉ. मनमोहन उपाध्यायः उपस्थितः आसीत्। तथैव न्यायनिर्णयार्थं सम्मान्याः विद्वांसः प्रो. सच्चिदानन्दमिश्रः, प्रो. बोधकुमारझाः, प्रो. देवदत्तसरोदे, डॉ. गणपति हेगडे च उपस्थिताः आसन्। अस्य कार्यक्रमस्य संयोजकः प्रो. बोधकुमारझाः आसीत्।

**महाराष्ट्रराज्यस्तरीयशास्त्रीयवाक्स्पर्धा**-क. जे. सोमैयापरिसरे महाराष्ट्रराज्यस्तरीयशास्त्रीयवाक्प्रतिस्पर्धा 10.03.2022 तमे दिनाङ्के परिसरनिदेशकानां प्रो. भारतभूषणमिश्रवर्याणामाध्यक्ष्ये समायोजिता। अस्यां स्पर्धायां मुख्यातिथिरूपेण प्रो. रामकिशोरत्रिपाठी, (सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी) तथैव सारस्वता-तिथिरूपेण प्रो. प्रकाशचन्द्रः (प्राचार्यचरः, मुम्बईपरिसरः) च उपस्थाय न्यायनिर्णयमकुरुताम्। महाराष्ट्रराज्यस्य विविधेभ्यः भागेभ्यः छात्राः आगत्य भागग्रहणमकुर्वन्। अस्य कार्यक्रमस्य संयोजकः प्रो.बोधकुमारझाः आसीत्।



**छात्रोपलब्धिः**-परिसरस्य छात्राः राष्ट्रस्तरे, राज्यस्तरे, जनपदस्तरे, परिसरे चायोजितासु विविधस्पर्धासु भागग्रहणं कृत्वा तत्र तत्र पुरस्कारान् च प्राप्तवन्तः।

**क्रीडा**-04.01.2022 तः 07.01.2022 दिनाङ्कपर्यन्तं मङ्गलूरु-विश्वविद्यालय-आळ्वास एजुकेशन् फाउंडेशन इत्यनयोः संयोजने समायोजिते 81तमान्तर्विश्वविद्यालयक्रीडास्पर्धासु डॉ. शङ्कर बी. आन्धले, शारीरिकशिक्षाशिक्षकस्य मार्गदर्शने परिसरस्य छात्राः विविधस्पर्धासु भागग्रहणमकार्षुः।



**पुरस्कारप्राप्तिः** - केन्द्रीयसंस्कृतविश्वविद्यालयेन 27.03.2022 तः 30.03.2022 तमदिनाङ्कपर्यन्तं कर्नाटकसंस्कृतविश्व-विद्यालयस्य सहयोगेन बेङ्गलूरुनगरे समायोजितायां 59तम्याम् अखिलभारतीयशास्त्रीय-स्पर्धायाम् परिसरस्य मैत्रेयी मयूर जानी नाम्नी शास्त्रिद्वितीयवर्षीयच्छात्रा अष्टाध्यायीकण्ठपाठे तृतीयस्थानं प्राप्नोत्। अपि च अनेकासु स्पर्धासु अस्माकं छात्राः भागग्रहणमकार्षुः।

परिसरवार्ताः

## प्राध्यापकानां क्रियाकलापाः उपलब्धयश्च

**प्रो रमाकान्तपाण्डेयः-** नवदेहलीस्थसाहित्य-अकादेम्या तिरुपतौ राष्ट्रियसंस्कृतविश्वविद्यालये जनवरीमासे 24-25 तमयोः दिनांकयोः 'समाजस्य विकासे भक्तिसाहित्यस्य योगदानम्' इति विषये समायोजितायां राष्ट्रियसंगोष्ठ्यां शोधपत्रम् उपस्थापितं सत्राध्यक्ष्यं च निरवहत्। अखिलभारतीयसंस्कृतसम्मेलने नवदेहलीस्थ-संस्कृतभवने 26 मार्च, 2022 तमे दिनांके 'स्वतन्त्रतासंग्रामः संस्कृतपत्रकारिता च' इति विषये व्याख्यानं प्रदत्तम्। 13 फरवरी, 2022 तमे दिनांके कालिदाससंस्कृताकादम्या दतियास्थ-पीताम्बरापीठे आयोजितायां क्षेत्रीयसंगोष्ठ्यां 'बुन्देलखण्डस्य संस्कृतसाहित्यम्' इत्यस्मिन् विषये मुख्यवक्तृत्वेन व्याख्यानं प्रदत्तम्।

**प्रो. सतीशकुमारकपूरः-** जम्मूस्थ-श्रीरणबीरपरिसरस्य आचार्येणानेन 25.01.2022 तमे दिनाङ्के गणतन्त्रदिवसमुपलक्ष्य देहली-संस्कृताकादम्या आयोजिते अखिलभारतीयसंस्कृतकविसम्मेलने 'जयति जयति मम भारतधरणी'ति काव्यप्रस्तुतिः कृता। एवञ्च 21.02.2022 तमे दिनाङ्के च श्रीरणवीरपरिसरे मातृभाषादिवसोपलक्ष्ये आयोजिते कार्यक्रमे पञ्जाबीभाषाया 'अन्दर दिल दी कौण जाणदा' इति काव्यं प्रस्तुतम्। 08.02.2022 तमे दिनाङ्के केन्द्रीयसंस्कृतविश्वविद्यालयमुख्यालयेन आयोजिते परीक्षापरिष्कार-परामर्शसमितेः प्रथमे उपवेशने भागं गृहीत्वा परीक्षाविषयकः परामर्शः प्रदत्तः। 14.03.2022 तमे दिनाङ्के पण्डितविद्यानिवास-मिश्रपुण्यतिथावायोज्यमानायां विद्याश्रीन्यासस्य सांव्वत्सारिकसंस्कृतकविगोष्ठ्यां नीचैः किमुच्चैः इति काव्यस्य प्रस्तुतिः कृता।

**डॉ. देवेन्द्रकुमारमिश्रः-** जम्मूस्थ-श्रीरणबीरपरिसरस्य शिक्षाशास्त्रविभागस्य प्राध्यापकेनानेन पुनश्चर्यापाठ्यक्रमे 31.01.2022 दिनाङ्कात् 12.02.2022 दिनाङ्कपर्यन्तं भागो गृहीतः।

**डॉ. सुमन्तचन्द्रपन्तः 'सुमन्तः'-** जम्मूस्थ-श्रीरणबीरपरिसरस्य साहित्यविभागस्य प्राध्यापकस्यास्य सहसम्पादकत्वे 'धर्मस्थली'ति पुस्तकस्य प्रकाशनम् अभवत्।

**डॉ. नीतूशर्मा-** जम्मूस्थ-श्रीरणबीरपरिसरस्य साहित्यविभागस्य प्राध्यापिकया अनया 24-25 तमयोः दिनाङ्कयोः आयोजितायाम् अन्ताराष्ट्रियव्याकरणसंगोष्ठ्याम् उपसर्गाणां व्यञ्जकत्वमिति विषयमवलम्ब्य शोधपत्रं प्रस्तुतम्।

**डॉ. राजकुमारमिश्रः-** जम्मूस्थ-श्रीरणबीरपरिसरस्य साहित्यविभागस्य प्राध्यापकेनानेन हरियाणासंस्कृताकादम्यां स्वतन्त्रतायाः अमृतमहोत्सवमालक्ष्य साप्ताहिकव्याख्यानमालायां काव्यार्थविचारः इति विषयमवलम्ब्य व्याख्यानं प्रस्तुतम्। जनवरीमासे ध्वनेराद्योपादानविमर्शः इति विषये हरियाणासंस्कृताकादम्या प्रकाशितायां हरिप्रभा इत्याख्यायां पत्रिकायां शोधपत्रं प्रकाशितम्। हरियाणासंस्कृताकादम्याः प्रकाश्यमानायाः 'हरिप्रभा' इति शोधपत्रिकायाः निर्णायकसमितौ सदस्यरूपेण दायित्वं निरूढवान्।

**प्रो. मनोजकुमारमिश्रः-** जम्मूस्थ-श्रीरणबीरपरिसरस्य वेदविभागस्य आचार्योऽयं 18.02.2022 तमे दिनाङ्के श्रीलालबहादुरशास्त्रि-राष्ट्रियसंस्कृतविश्वविद्यालयस्य विद्वत्परिषदि भागं गृहीतवान्। 08.03.2022 तमे दिनाङ्के केन्द्रीयसंस्कृतविश्वविद्यालयस्य देवप्रयागपरिसरे कर्मकाण्डविषये व्याख्यानमददात्। 27-28.03.2022 तमे दिनाङ्के श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृत-विश्वविद्यालये आयोजितायां शोधसमीक्षासमितौ भागमगृहीत्।

**डॉ. योगेन्द्रदीक्षित-श्रीविशालमहाजनौ-** 09.03.022 दिनाङ्कात् केन्द्रीयसंस्कृतविश्वविद्यालयस्य मुख्यालयेनायोजितायां त्रिदिवसीयनैककार्यशालायां श्रीरणवीरपरिसरस्य आधुनिकविषयविभागीयौ प्राध्यापकौ डॉ. योगेन्द्रदीक्षित-श्रीविशालमहाजनौ भागं गृहीतवन्तौ।

**डॉ. प्रमोदकुमारशुक्लः-** जम्मूस्थ-श्रीरणबीरपरिसरस्य शिक्षाशास्त्रविभागस्य प्राध्यापकेनानेन 25.03.2022 तमे दिनाङ्के 'स्वातन्त्र्योत्तर-भारते संस्कृतविकासयात्रा' इति विषयमवलम्ब्य उत्तरप्रदेशसंस्कृतसंस्थानेन आयोजितायां संगोष्ठ्यां शोधपत्रवाचनं प्रकाशनञ्च कृतम्।

**डॉ. मोनालीदास-** प्रयागराजस्थ-गंगानाथझापरिसरस्य प्राध्यापिका इयं जयपुरस्य सांगानेरस्थ-श्रीदिगम्बरजैन-आचार्यसंस्कृतमहाविद्यालये दशदिवसात्मिकायां साहित्यविभागीयकार्यशालायां 27.01.2022-05.02.2022 इत्यवधौ भागमग्रहीत्। सा च 12-19 जनवरी, 2022 इत्यवधौ आयोजिते संकायविकासकार्यक्रमे प्रतिभागितां कृतवती।

**आचार्यः सूर्यनारायणभट्टः, डॉ. राघवेन्द्रभट्टः, डॉ. चन्द्रशेखरभट्टः, श्रीवेङ्कटेशमूर्तिः, डॉ. कविता एस. च-** शृंगेरीस्थ-श्रीराजीव-गान्धीपरिसरात् इमे प्राध्यापकाः लखनऊपरिसरे प्रवृत्तायां राष्ट्रियशिक्षानीतिसम्बन्धिन्यां कार्यशालायां भागमगृह्णन्।

**डॉ. सि. हेच्. के पद्मनाभः श्रीशशिधर के.वि. च–** शृंगेरीस्थ–श्रीराजीव–गान्धीपरिसरस्य प्राध्यापकौ इमौ केन्द्रीयसंस्कृतविश्व–विद्यालयस्य मुख्यालये NAAC निमित्ते समावेशे भागम् अवहताम्।

**डॉ. सि.हेच्.के. पद्मनाभः–** शृंगेरीस्थ–श्रीराजीव–गान्धीपरिसरस्य प्राध्यापकोऽयं बेलूरस्थे आर.के.एम्.वि.ई.आर.ए.संस्थायां प्रवृत्तायां कार्यशालायां संसाधकरूपेण व्याख्यानमकरोत्, शब्दकल्पद्रुमस्य यान्त्रिकसंस्करणस्य मार्गदर्शकत्वेन भारतीयज्ञानपरम्परा (IKS) परियोजनायां कार्यं करोति, अन्ताराष्ट्रियव्याकरणसंगोष्ठ्यां जम्मूनगरे प्रवृत्तायाम् अनभिहिते इति विषये शोधपत्रं प्रास्तौत्, काञ्चीपुरे विजयवाटिकायां च वाक्यार्थसभायां भागमग्रहीत्, मद्दुलपल्लि माणिक्यशास्त्रि सभायां रु. 5000 रूप्यपुरस्कारेण सम्मानितः।

**आचार्यः सूर्यनारायणभट्टः–** शृंगेरीस्थ–श्रीराजीवगान्धीपरिसरस्य आचार्योऽयं महाराष्ट्रस्थे कुडालक्षेत्रे प्रवृत्तायां शास्त्रार्थसभायां भागमग्रहीत्, राष्ट्रीयशिक्षानीतेः क्रियान्वयसमितिसदस्यत्वेन नियुक्तश्च।

**डॉ. नारायणवैद्यः –** शृंगेरीस्थ–श्रीराजीवगान्धीपरिसरस्य आचार्योऽयं भोपालस्थे महर्षिपतञ्जलिसंस्थाने संस्कृतनाटकशिक्षणविधयः तेषामुपयोगश्च इति विषये संसाधकरूपेण व्याख्यानमकरोत्।

**डॉ. विश्वनाथहेगडे –** शृंगेरीस्थ–श्रीराजीवगान्धीपरिसरस्य आचार्योऽयं 27.1.2022 तः 2.2.2022 पर्यन्तं प्राध्यापकविकासकार्यक्रमे भागमवहत्।

**डॉ. प्रमोदभट्टः –** शृंगेरीस्थ–श्रीराजीवगान्धीपरिसरस्य आचार्योऽयं पुराणेतिहासयोः श्राद्धकल्पविमर्श इति विषये शोधकार्यं कृत्वा विद्यावारिध्युपाधये अर्हतां प्राप्नोत्।

**डॉ. ओम्प्रकाशसाहनी –** शृंगेरीस्थ–श्रीराजीवगान्धीपरिसरस्य आचार्योऽयं YBN विश्वविद्यालये रांचीस्थे अतिथिवक्तृत्वेन भाषणं व्यधात्।

**डॉ. कविता एस्. –** शृंगेरीस्थ–श्रीराजीवगान्धीपरिसरस्य आचार्या बाळेहोन्नूरे महिलासाहित्यसम्मेलने कवितां प्रस्तुतवती, केन्द्रीयसंस्कृतविश्वविद्यालयेन अन्ताराष्ट्रियमहिलादिवसे सम्मानिता, कन्नडसाहित्य कण्मणि इति बिरुदं प्राप्तवती च।

**डॉ. सुधांशुकुमारनन्दः –** शृंगेरीस्थ–श्रीराजीवगान्धीपरिसरस्य आचार्योऽयं अन्ताराष्ट्रियवास्तुशास्त्रीयकार्यशालायां तिरुपतिस्थ–राष्ट्रियसंस्कृतविश्वविद्यालये प्रवृत्तायां भागमग्रहीत्।

**डॉ. रमानन्दभट्टः –** शृंगेरीस्थ–श्रीराजीवगान्धीपरिसरस्य आचार्योऽयं अन्ताराष्ट्रियशोधसंगोष्ठ्यां भोपाले प्रवृत्तायां सप्तमभावचिन्तनमिति विषये शोधपत्रं समार्पयत्।

**डॉ. पवनव्यासः –** जयपुरपरिसरस्य सर्वदर्शनविभागस्य सहायकाचार्यः डॉ. पवनव्यासः 13.01.2022 तमे दिनांके उज्जयिन्यां कालिदास–संस्कृताकादमीपक्षतः समायोजिते कल्पवल्लीमहोत्सवे मध्यप्रदेशशासनस्य भोजपुरस्कारेण सभाजितः।

**डॉ. प्रफुल्लगडपालः–डॉ. डी. दयानाथः च –** 09.03.2022 दिनाङ्कात् 12.03.2022 दिनांकं यावत् केन्द्रीयसंस्कृतविश्वविद्यालयस्य मुख्यालयेनायोजितायां त्रिदिवसीयनैककार्यशालायां लखनऊपरिसरतः प्राध्यापकौ डॉ. प्रफुल्लगडपाल–डॉ. डी. दयानाथौ भागं गृहीतवन्तौ।

**डॉ. शैलेन्द्रप्रसादोनियालः –** 27.12.2021 तः 22.01.2022 पर्यन्तं विश्वविद्यालयानुदानमाध्यमेन जवाहरलालनेहरूविश्वविद्यालये नवदेहल्यां ऑनलाईनमाध्यमेन एफ.आई.पी. कार्यक्रमे सफलाभ्यर्थित्वेन भागः गृहीतः। 26 जनवरीमासस्य षड्विंशे दिनांके ध्वजारोहणानन्तरं राष्ट्रीयैकता विकासार्थं तथा च देशभक्तानां संस्मरणसभायाः संचालनं विहितम्। मार्चमासस्य 8 दिनांकादारभ्य 28 दिनाङ्कं यावत् एकविंशति दिवसात्मकः केन्द्रीयसंस्कृतविश्वविद्यालयस्य वित्तीयसहयोगेन पौरोहित्यप्रशिक्षणवर्गः समन्वयकत्वेन संचालितः तत्रैव चत्वारि व्याख्यानानि प्रदत्तानि। 13–14 उत्तराखण्डराज्यस्तरीयशास्त्रीयस्पर्धायां वेदभाष्यभाषणे धातुकण्ठपाठे निर्णायकत्वं निर्व्यूढम्। दशदिवसीयनाट्यप्रशिक्षणवर्गे 13–14.03.2022 दिनाङ्के सहसंयोजकत्वेन प्रशिक्षकत्वेन छात्राणां प्रशिक्षणं कृतम्।

**डॉ. अमन्दमिश्रः –** फरवरीमासस्य 5 दिनांके वसन्तपञ्चमीमहोत्सवे डॉ. अमन्दमिश्रस्य उपाचार्यत्वे वाग्देव्याः होमपूर्वकं वरिवस्या सम्पन्ना। मार्चमासस्य 8 दिनांकादारभ्य 28 दिनाङ्कं यावत् एकविंशतिदिवसात्मकः केन्द्रीयसंस्कृतविश्वविद्यालयस्य वित्तीयसहयोगेन पौरोहित्यप्रशिक्षणवर्गः सहसमन्वयकत्वेन संचालितः तत्रैव त्रीणि व्याख्यानानि प्रदत्तानि। 13–14 मार्च, 2022 इत्यवधौ उत्तराखण्डराज्यस्तरीयशास्त्रीयस्पर्धायां अमरकोषकण्ठपाठे संयोजकत्वं निर्व्यूढम्।

**डॉ. मीनाक्षी बरहाटे** – मुम्बईपरिसरीया प्राध्यापिकेयं मराठीभाषायाः अध्यापिका अक्षरवाङ्मयप्रकाशनम्, पुणे द्वारा 2022 तमे वर्षे फेब्रवरीमासे प्रकाशिते 'स्त्रीयांचे समकालीन साहित्य' (ISBN- 978-93-84470-62-3) इति पुस्तके पाठं व्यलिखत्।

**डॉ. गीता दूबे** – मुम्बईपरिसरीया हिन्दीप्राध्यापिकेयं 04.02.2022 तमे दिनाङ्के मानविकी एवं सामाजिक विज्ञान संकाय, उच्च अध्ययन शिक्षा संस्थान (मा. वि.) सरदारशहर, चुरू, राजस्थानम् द्वारा समायोजिते राष्ट्रियवेबिनारमध्ये विशिष्टवक्तृरूपेण समाहूता आसीत्। 04.02.2022 तमे दिनाङ्के मानविकी एवं सामाजिक विज्ञान संकाय, उच्च अध्ययन शिक्षा संस्थान (मा.वि.) सरदारशहर, चुरू, राजस्थानम् द्वारा समायोजिते राष्ट्रियवेबिनारमध्ये छायावादः एक पुनर्मूल्यांकन विषये पत्रं प्रास्तौत्। 11-12 मार्च 2022 तमदिनाङ्कयोः 'संस्कृत से हिन्दी अनुवाद की परम्परा आवश्यक कौशल व चुनौतियां : श्रीमद्भगवद्गीता संदर्भ में' इति विषये समायोजितायां राष्ट्रियसङ्गोष्ठ्यां शोधपत्रवाचनमकरोत्। 24-25 मार्च 2022 तमदिनाङ्कयोः 'सरदार पटेल एवं अखंड भारत : एक अध्ययन' इति विषये के. एम. अग्रवालमहाविद्यालयः, कल्याण इत्यत्र समायोजितराष्ट्रियपरिसंवादे पत्रप्रस्तुतिमकरोत्।

**डॉ. कुमारः** – मुम्बईपरिसरस्य सहायकाचार्यः, शिक्षाशास्त्रविभागः कविकुलगुरुकालिदाससंस्कृतविश्वविद्यालयः, नागपुरम्, इत्यस्य रत्नगिरिशाखायाः महाविद्यालयेन समायोजिते शोधविभागीय-विशिष्टव्याख्यानकार्यक्रमे संस्कृतशिक्षा – अनुसन्धानं च इति विषयं व्याख्यातुं 26.02.2022 तमे दिनाङ्के शैक्षणिकसंसाधकरूपेण समाहूतः आसीत्।

**डॉ. एस्. कृष्णा** – मुम्बईपरिसरस्य सहायकाचार्या, (शिक्षाशास्त्रविभागः,) 04.02.2022 तमदिनाङ्के हरियाणा संस्कृत अकादमी, पंचकूला तथा संस्कृतविभागः, बाबू अनन्त राम जनता महाविद्यलय, कैथल इत्यनयोः सौजन्ये भारतीय संस्कृति में उत्सव परम्परा इति विषये समायोजितायाम् आभासीयैकदिवसीयसङ्गोष्ठ्यां भागग्रहणमकरोत्। 22-23.02.2022 तमदिनाङ्कयोः आवासीयवर्ग-परिप्रेक्ष्ये नवाचारात्मकाः अध्ययनाधिगमोपागमाः अभिविचाराः उपहूतयश्च इति विषये समायोजितायाम् आभासीयसङ्गोष्ठ्यां भागग्रहणमकरोत्।

**डॉ. शङ्कर बी. आन्धले** – मुम्बईपरिसरस्य शारीरिकशिक्षाप्राध्यापकः, राष्ट्रियशिक्षानीति 2020 इत्यस्य कार्यान्वयने महाराष्ट्रे अवसराः प्रत्याह्वानानि च इति विषये प्रीमिनेंट एजुकेशन् अंड रीसर्च असोसिएशन, पुणे एवं सोमैयाविद्याविहारविश्वविद्यालयः इत्यनयोः 30.03.2022 तमे दिनाङ्के समायोजितायां सङ्गोष्ठ्यां भागग्रहणमकार्षीत्।

**डॉ. चक्रधरमेहरः**- 14-15.03.2022 तमयोः दिनाङ्कयोः श्रीहरिसिंह-गौरविश्वविद्यालयस्य संस्कृतविभागेन आयोजितायाम् अखिलभारतीयवैदिकसंगोष्ठ्यां शिक्षाशास्त्रविभागस्य प्राध्यापकेनानेन संसाधकरूपेण व्याख्यानं प्रदत्तम्।

**डॉ. विजेन्द्रशर्मा**- जयपुरपरिसरस्य ज्योतिषविभागस्य सहायकाचार्येणानेन श्रीकल्याणदत्तनामयन्त्रं निर्मितम्।

## अध्यापकानां स्थानान्तरणम्

- देवप्रयागपरिसरस्य व्याकरणविभागाध्यक्षाणां प्रो. बनमालीबिश्वालमहोदयानां स्थानान्तरणं नवदेहलीस्थ केन्द्रीयसंस्कृत-विश्वविद्यालये मुख्यालये सञ्जातम्। व्याकरणविभागीयप्राध्यापकस्य डॉ. मनीषशर्ममहोदयस्य स्थानान्तरणं केन्द्रीयसंस्कृत-विश्वविद्यालयस्य पुरीपरिसरे सञ्जातम्।
- 02.03.2022 तमे दिनाङ्के आचार्यः आर् बालाजीवर्यः गुरुवायूरपरिसरात् स्थानान्तरणं प्राप्य राजीवगान्धीपरिसरं समागतः।
- 28.02.2022 तमे दिनाङ्के सर्वदर्शनविभागस्य सहायकाचार्यायाः डॉ. रानीदाधीचमहोदयायाः स्थानान्तरणं जम्मूपरिसरतः जयपुरपरिसरं प्रति अभवत्।
- जम्मूपरिसरस्य साहित्यविभागस्य प्राध्यापकस्य श्रीपङ्कजमहोदयस्य स्थानान्तरणं प्रयागराजपरिसरं प्रति 01.03.2022 तमे दिनाङ्के अभवत्। ततश्च 04.03.2022 तमे दिनाङ्के डॉ. राजकुमारमिश्रमहाभागस्य स्थानान्तरणं श्रीरणवीरपरिसरे अभवत्।
- केन्द्रीयसंस्कृतविश्वविद्यालयस्य वेदव्यासपरिसरात् साहित्यविभागतः डॉ. राजकुमारमहोदयस्य स्थानान्तरणं श्रीरणवीरपरिसरजम्मूं प्रति अभूत्। अपि च व्याकरणविभागीयायाः प्राध्यापिकायाः डॉ.रागिणीशर्ममहोदयायाः स्थानान्तरणं भोपालपरिसरं प्रति अभूत्। अस्मिन् एव क्रमे श्रीरणवीरपरिसरजम्मूतः साहित्यविभागे वेदव्यासपरिसरे श्रीपङ्कजमहोदयस्य स्थानान्तरीभूय आगमनम् अभूत्।
- डॉ. अनिरुद्धनारायणशुक्लः, संविदाध्यापकः, ज्योतिषविभागः, 15.03.2022 तमे दिनाङ्के क. जे. सोमैयापरिसरतः कार्यमुक्तिं प्राप्य लखनऊपरिसरं प्रति स्थानान्तरितः।
- डॉ. विनोदकुमारशर्मा, संविदाध्यापकः, शिक्षाशास्त्रविभागः, 16.03.2022 तमे दिनाङ्के क. जे. सोमैयापरिसरतः जयपुरपरिसरं प्रति कार्यस्थानान्तरणं प्राप्य जयपुरपरिसरमगच्छत्।

# संस्कृत विवि में ड्रामा कॉम्पिटिशन 22 से

सिटी रिपोर्टर| अरेरा कॉलोनी स्थित प्रशासन अकादमी में 22 मार्च से केंद्रीय संस्कृत यूनिवर्सिटी का इंटर कैंपस ड्रामा कॉम्पिटिशन का आयोजन हो रहा है। इस तीन दिनी कॉम्पिटिशन में यूनिवर्सिटी के 12 कैंपस की टीमें हिस्सा ले रही हैं। स्पर्धा में ये टीमें 11 नाटकों की प्रस्तुति देंगी। नेशनल लेवल के इस आयोजन में देशभर से 450 से 500 प्रतिनिधि हिस्सा ले रहे हैं। संस्कृत यूनिवर्सिटी कई सालों से यह कॉम्पिटिशन करा रह है, लेकिन, इस बार इस आयोजन की मेजबानी भोपाल को मिली है।

# Entertainment not sole o[f] of theatre: Nitish Bhara[dwaj]

3-day Inter-Campus Sanskrit Drama Festival begins at

OUR STAFF REPORTER
BHOPAL



Film and TV actor Dr Nitish Bharadwaj has said that entertainment is not the sole objective of theatre. Theatre transports the audience from one world into another and the actors, thus, create a new world.

Bharadwaj was speaking on the inaugural day of a three-day Inter-Campus Sanskrit Drama Festival at

Vice Chancellor of Maharshi Panini Sanskrit and

ensure the growth of Indian culture. He said that




मध्य स्वदेश
स्वदेश ग्वालियर समूह का भोपाल संस्करण

भोपाल - मध्य स्वदेश
23 Mar 2022

# देववाणी में नाट्य दर्शन सौभाग्य की बात

## तीन दिवसीय अन्तःपरिसरीय संस्कृत नाट्यमहोत्सव का शुभारम्भ

मध्य स्वदेश संवाददाता ■ भोपाल

...वाणी है इस देववाणी ... की धारा का दर्शन ... बात है। यह कहना है ...भिनेता व बीआर चोपड़ा ...हाभारत में श्रीकृष्ण की ...भा चुके नीतिश भारद्वाज ... तीन दिवसीय ...रीय संस्कृत ...सव के शुभारम्भ ...ो बतौर मुख्यअतिथि ...र रहे थे। भारत सरकार ...त्रालय द्वारा संचालित ...कृत विश्वविद्यालय के ...ं यह प्रशासन एकेडमी ...त किया गया था। इस ... प्रो. सीजी विजयकुमार के साथ केन्द्रीय संस्कृत विश्वविद्यालय के कुलपति प्रो. श्रीनिवास वरखेडी प्रमुख रूप से मौजूद थे।

अपने उद्बोधन में श्री भारद्वाज ने कहा कि कलाकार कला के प्रभाव से स्वयं ही स्वतंत्र होता है। यहां उन्होंने नाट्य के उद्देश्य पर अपनी बात रखते हुए कहा कि इसका उद्देश्य मात्र मनोरंजन नहीं होता है, बल्कि इसका परम उद्देश्य दर्शकों को एकभाव विश्व से निकालकर दूसरेभाव विश्व में पहुँचाना होता है। केन्द्रीय संस्कृत विश्वविद्यालय के कुलपति प्रो. श्रीनिवास वरखेडी का अपने अध्यक्षीय उद्बोधन में यहां कहना था कि आधुनिक युग में भी यह अत्यावश्यक है कि कला कर्म व संस्कृत एक दूसरे साथ-साथ रहें। कला धर्मिता के साथ में यदि संस्कृत जुड़ी रहती है तभी भारतीय संस्कृति पोषित व पल्लवित होती है। जबकि इसके पहले प्रो. सी. जी. विजयकुमार ने रंगकर्म का सामान्य जीवन से जुड़ाव बताते हुए कहा कि कलाकार विरोधी रसों को अपने नेत्रों के द्वारा एक ही साथ प्रस्तुत कर सकता है। इस अवसर पर भोपाल परिसर के निदेशक प्रो. जे. भानुमूर्ति, नाट्य महोत्सव के संयोजक प्रो. रमाकान्त पाण्डेय, केन्द्रीय संस्कृत विश्वविद्यालय लखनऊ परिसर के निदेशक प्रो. सर्वनारायण झा व डॉ. मधुकेश्वर भट्ट प्रमुख रूप से मौजूद रहे।



सिटी लाइव/धर्म समाज/आसपास

www.naidunia.com

# अंग्रेजों ने भी स्वीकारा कि उनकी भाषा पर संस्कृत का प्रभाव पड़ा : नीतीश भारद्वाज

## केंद्रीय संस्कृत विश्वविद्यालय का तीन दिवसीय संस्कृत नाट्य महोत्सव शुरू

भोपाल (नवदुनिया प्रतिनिधि)। केंद्रीय संस्कृत विश्वविद्यालय का तीन दिवसीय संस्कृत नाट्य महोत्सव मंगलवार से शुरू हुआ। कार्यक्रम के मुख्य अतिथि महाभारत में श्रीकृष्ण की भूमिका निभाने वाले नीतीश भारद्वाज थे। उन्होंने कहा कि संस्कृत के माध्यम से नाटकों का मंचन एक ऐसी कल्पना है, जो भारत की इस धरोहर को जीवित रखने के लिए बहुत आवश्यक है। बहुत समय पहले मैंने एक डाक्यूमेंट्री देखी थी, जिसमें अंग्रजों से स्वीकार किया था कि इस देवभाषा का प्रभाव उनकी प्राचीन भाषा लैटिन, ग्रीक, अविस्तन, जर्मन, रशियन पर पड़ा। तब मैंने बहुत गौरव का अनुभव किया था कि इस देववाणी को जिस जगह बोला जाता है, मैं उस जगह से हूं।

राजधानी के शाहपुरा स्थित प्रशासन अकादमी में आयोजित इस कार्यक्रम में उन्होंने अपने उद्बोधन में कहा कि भाषा किसी भी धरोहर का एक महत्वपूर्ण



नीतीश भारद्वाज। ● नवदुनिया

अंग होती है और संस्कृत भाषा तो है ही प्राचीन। ये सनातन धर्म की भाषा, साहित्य की भाषा, ऋग्वेद की भाषा और देववाणी है, जिसका प्रभाव पूरे विश्व में दिखाई देता है। 25 साल पहले मैंने मलयालम में फिल्म की थी। उसको करने में इसलिए आसानी हुई, क्योंकि मलयालम में 70 से 80 प्रतिशत संस्कृत थी और शब्द समझ आ रहे थे। बंगाली, मराठी, गुजराती भाषा देखें, उसमें भी बहुत सारे संस्कृत के शब्द हैं। इस भाषा का प्रभाव हर भाषा में देखने को मिलता है। कार्यक्रम के विशिष्ट अतिथि प्रो. सीजी विजयकुमार थे।

### सांस्कृतिक विविधता के रंग देखने को मिले

केंद्रीय संस्कृत विश्वविद्यालय भोपाल के निदेशक प्रो. जे. भानुमूर्ति ने कहा कि भारत वर्ष की सांस्कृतिक विविधता के रंग भोपाल में रंगपंचमी के दिन साक्षात प्रदर्शित हो रहे हैं। केंद्रीय संस्कृत विश्वविद्यालय के कुलपति प्रो. श्रीनिवास वरखेडी ने कहा कि आधुनिक युग में भी यह अत्यावश्यक है कि कला कर्म व संस्कृत साथ-साथ रहें। कलाधर्मिता के साथ में यदि संस्कृत जुड़ी रहती है, तभी भारतीय संस्कृति पोषित व पल्लवित होती है। कार्यक्रम में केंद्रीय संस्कृत विश्वविद्यालय, लखनऊ के निदेशक प्रो. सर्वनारायण झा ने अतिथियों को धन्यवाद ज्ञापित किया। उद्घाटन सत्र का संचालन डा. मधुकेश्वर भट्ट ने किया।



प्रशासन अकादमी के स्वर्ण जयंती सभागार में संस्कृत नाटक 'मीवारप्रतापम्' का मंचन करते कलाकार। नाटक की सेट डिजाइनिंग और प्रकाश व्यवस्था आकर्षक थी। ● प्रवीण दीक्षित

**चार नाटकों का हुआ मंचन :** नाट्य महोत्सव के संयोजक प्रो. रमाकांत पांडेय ने इस वर्ष के ... की रूपरेखा प्रस्तुत की व समस्त नाटकों की विषयवस्तु की जानकारी दी। पहले दिन चार नाटकों का मंचन हुआ। इसमें कोटभलवाल (जम्मू) ने नाटक स्वातंत्र्यशौर्यम्, बलाहर (हिमाचल प्रदेश) ने नाटक मीवारप्रतापम् (1-3), लखनऊ (उत्तर प्रदेश) ने नाटक मीवारप्रतापम् (4-6) और पुन्नराट्टुक्करा (केरल) के कलाकारों ने नाटक ...

